# ब्रह्मसूत्रशाङ्करीवृत्तिः

## उमचिगिशङ्करशास्त्रिविरचिता

सम्पादकः
डॉ० केदारनाथत्रिपाठी




प्रकाशकः
शैवभारती-शोधप्रतिष्ठानम्
जंगमवाड़ीमठ, वाराणसी - २२१ ००१

शोधप्रकाशन ग्रन्थमाला — १५

# ब्रह्मसूत्रशाङ्करीवृत्तिः

उमचिगिशङ्करशास्त्रिविरचिता

सम्पादकः
**डॉ० केदारनाथत्रिपाठी**
काशीहिन्दूविश्वविद्यालयीयप्राच्यविभागे
धर्मविज्ञानसंकाये सांख्यविभागाध्यक्षचरः

प्रकाशकः
**शैवभारती-शोधप्रतिष्ठानम्**
जंगमवाड़ीमठ, वाराणसी - २२१ ००१

*प्रकाशक*
**शैवभारती-शोधप्रतिष्ठानम्**
डी. ३५/७७, जंगमवाड़ीमठ
वाराणसी - २२१ ००१



प्रथमं संस्करणम् १९९८

मूल्यम् : सजिल्द रु.२५०
अजिल्द रु.१५०

*अक्षर संयोजन*
**शिव-शक्ति कम्प्यूटर प्रोसेस**
जंगमवाड़ीमठ, वाराणसी

*मुद्रक*
**जौहरी प्रिंटर्स**
शिवाजी नगर, महमूरगंज, वाराणसी

*Research Publications Series — 15*

# BRAHMASUTRASANKARIVṚTTI

**of**

**Umacigi Śankaraśāstri**

*Edited by*

**Dr. Kedarnath Tripathi**

*Ex-Head, Department of Sānkhya*

*Faculty of Sanskrit Vidyā Dharma Vijñāna*

*Banaras Hindu University*

**SHAIVA BHARATI SHODHA PRATISHTHANAM**

**D. 35.77, Jangamawadimath, Varanasi - 221 001**

*Published by :*

**SHAIVA BHARATI SHODHA PRATISHTHANAM**
D. 35/77, Jangamawadimath
Varanasi - 221 001



First published 1998

ISBN 81-86768-27-0 (Hb)
ISBN 81-86768-28-9 (Pb)

Price : Rs.250 (Hb) Rs.150 (Pb)

*Laser Typeset at :*

**Shiva-Shakti Computer Process**
Jangamawadimath, Varanasi - 221 001

*Printed at :*

**Jauhari Printers**
Mahmoorganj, Varanasi 221 010



श्रीजगद्गुरुविश्वाराध्यो विजयतेतराम्

श्रीकाशीजगद्गुरुविश्वाराध्यज्ञानसिंहासनाधीश्वर-

**श्री श्री श्री १००८ जगद्गुरुविश्वेश्वरशिवाचार्यमहास्वामिनां**

# शुभाशीर्वचनम्

## (प्रथमसंस्करणस्य)

दर्शनप्रधानेऽस्मिन् भारते वर्षे सन्ति बहूनि किल दर्शनानि, तेषु दर्शनीयतमं वीरशैवदर्शनम्। तदुक्तं पारमेश्वरागमे — "न वीरशैवसदृशमतमस्ति जगत्त्रये" इति। अष्टावरण-पञ्चाचार-षट्स्थलात्मकमिदं दर्शनं युगे युगे संस्थापितं श्रीरेणुकादि-पञ्चभिराचार्यवर्यैः। क्रियाज्ञानसमुच्चयात्मकमिदं शक्तिविशिष्टाद्वैत-द्वैताद्वैत-भेदाभेद-विशेषाद्वैताद्यभिधानैरभिधीयते हि लोके।

इह खलु केचन दार्शनिका जीवेश्वरयोः सर्वदा भेदं प्रतिपादयन्त ईश्वरप्राप्त्युपायमुपासनादिरूपां क्रियामङ्गीकुर्वन्ति। अपरे तु जीवेश्वरयोः सर्वदाऽभेदं प्रतिपादयन्तोऽज्ञानेन प्रतीयमानभेदनिरसनार्थमीश्वरभावापत्त्यर्थं विज्ञानमेव मुख्यं साधनमिति प्रतिपादयन्ति। तयोरेतादृशविरोधपरिहारेण सामरस्यप्रतिपादनाय क्रियाज्ञान-समुच्चयात्मकं भेदाभेदरूपं दर्शनमाविश्चक्रुर्वीरशैवाचार्याः। तदुक्तं सिद्धान्तशिखामणौ—

ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः ।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम् ।। इति ।

अत एव वीरशैवमतं विश्वमतमिति प्रसिद्धम् ।

अत्र केचनाविचारितमीमांसाः परदर्शनाऽसहिष्णवः पण्डितं-मन्यमाना एवमाक्षिपन्ति यद् वीरशैवमतं न वैदिकमिति। तेषां तद्वचनमविचारितरमणीयमेव। एतन्मतस्य वैदिकत्वं प्रतिपादितं क्रियासारकारैर्नीलकण्ठशिवाचार्यैः — "तथैव वीरशैवानामागमा वैदिकाः मताः" इति ।

ईशवीयेऽष्टमे शतके वीरशैवीया विद्वद्वरेण्या आचार्यप्रवराः श्रीनीलकण्ठशिवाचार्य-भगवत्पादा व्यासीयब्रह्मसूत्राणामुपरि शक्तिविशिष्टाद्वैतसिद्धान्तप्रतिपादकं नीलकण्ठ-भाष्यमकार्षुः। तदुक्तं क्रियासारे —

इति तेन प्रार्थितः सन् दयालुः पार्वतीपतिः ।।
नीलकण्ठशिवाचार्यनाम्ना भाष्यमचीकरत् ।
विशिष्टाद्वैतसिद्धान्तप्रतिपादकमुत्तमम् ।। इति ।

(क्रि.सा., उ. १. २८-३२)

मतेऽस्मिन् द्वौ नीलकण्ठशिवाचार्यौ वर्तेते। तत्राद्यो भाष्यकर्ता, द्वितीयश्च भाष्यार्थस्य कारिकारूपेण क्रियासाराभिधानेन संग्रहीता। आद्यानां श्रीनीलकण्ठशिवाचार्याणा-माद्यश्रीशङ्कराचार्याणां च मिथः शास्त्रार्थः सम्पन्न इति शङ्करदिग्विजयस्य षञ्चदशसर्गतोऽवगम्यते। तद्यथा —

इति युक्तिशतैः स नीलकण्ठः कविरक्षोभयदद्वितीयपक्षम् ।
निगमान्तवचः प्रकाश्यमानं कलभः पद्मवनं यथा प्रफुल्लम् ।।४९।।

एतेनेदमवगम्यते यत् श्रीनीलकण्ठशिवाचार्या आद्यश्रीशङ्कराचार्याश्च समकालीना आसन्निति।

एतन्नीलकण्ठभाष्यकाठिन्यपरिहारार्थमाधुनिकनीलकण्ठशिवाचार्या नीलकण्ठ-भाष्योपरि सरलया सुरगिरा कारिका विरचयामासुः। तदुक्तं क्रियासारे —

मयापि तस्य तात्पर्यं श्रोतॄणां सुखबुद्धये ।
कारिकारूपतः सर्वं क्रमेणैव निबध्यते ।। इति ।

(क्रि. सा. १.३२)

एतत्क्रियासारानुसारेण व्यासीयब्रह्मसूत्राणामुपरि मैसूरभूपतिकृपाच्छायाश्रिता: पण्डितप्रकाण्डा उमचिगीमळेमठीया: श्रीशङ्करशास्त्रिण: — "व्यासीयाखिलब्रह्मसूत्रविवृतिं कुर्वे शिवप्रीतये" इति । स्वकृतप्रतिज्ञानुसारेण ब्रह्मसूत्राणां शाङ्करीवृत्तिं कृतवन्त: ।

एते शास्त्रिण: स्वजीवनकाले उपनिषदाद्यनेकग्रन्थानामुपरि संस्कृतभाषया कर्नाटक-भाषया च व्याख्यां कृत्वा सुप्रसिद्धा बभूवु: । तैर्लिखिता अनेके ग्रन्था नाद्यावधि मुद्रापिता: । "प्रतिबन्धकोऽपसारयति लक्ष्यान्महान्तमपि" इति वचनानुसारेण शास्त्रिणामर्थाभाव एव प्रतिबन्धक आसीद् ग्रन्थरचनायाम्, रचितानां च मुद्रणे ।

अस्मद्विद्यार्थिदशायां द्विवारं शास्त्रिणां सन्दर्शनमभूत् । तदा तै: सह सम्भाषणे तैरेवमुक्तम् — "य: कोऽपि वा विषयो भवतु शास्त्रप्रामाण्यं विना नाऽहमङ्गीकरोमि, भवद्भिरप्येवमेव व्यवहर्तव्यम्" इति । तेषां तद्वचनं नाद्यावधि विस्मृतमस्माभि: ।

शास्त्रिणां ब्रह्मसूत्रशाङ्करीवृत्त्याख्योऽयं ग्रन्थो नाद्यावधि मुद्रापित:, अधुना विद्यानुरागिणो विद्वांस: श्रीमन्त: शिवप्रकाशशिवाचार्या एतद्ग्रन्थस्य मुद्रणं कृत्वा वीरशैवधर्मप्रचारकार्यं कुर्वन्त: सन्तीति सन्तोषास्पदमेव । एते च बेंगळूरचामराजेन्द्रसंस्कृत-महाविद्यालये 'विद्वान्' इति उपाधिना सम्भाविता: सन्ति । एतेषामेतत्कार्यमत्यन्तं श्लाघनीयं वर्तते ।

वृत्तिरियं महीशूरनगरीविद्योतमानश्रीमन्महाराजसंस्कृतमहाविद्यालयस्य शक्ति-विशिष्टाद्वैतप्राध्यापकानां मुण्डककैवल्याद्युपनिषत्प्रकाशकानामास्थानविदुषां वे. ब्र. श्री. एम. जि. नंजुण्डाराध्यमहोदयानां सम्पादकत्वे सम्यक् परिशोध्य प्रकाशितेत्यतीव प्रमोदास्पदमस्माकम् ।

वयं नूनमाशास्महे एतेषां हस्तेन ईदृशानि शास्त्रप्रचारकार्याणि भवितव्यानीति, येनैतद्ग्रन्थाध्ययनपरिशीलनाभ्यां मुमुक्षवो लिङ्गाङ्गसामरस्यस्वरूपं सुदुर्लभं मोक्षं प्राप्नुयु: । एतेन जिज्ञासुच्छात्रकुलमप्यत्यन्तमुपकृतं स्यादिति ।

**प्रमादीसंवत्सरे आश्वीजशुक्ल-**
**विजयदशमीशनिवासरे**
**(दि. ६-१०-१९७३)**

**शिवं भूयात्**
**इत्याशिष:**



# ग्रन्थकर्तृणां प्रस्तावना

## (प्रथमसंस्करणस्य)

इह खलूपनिषद्ब्रह्मसूत्रादिभाष्याणि वीरशैवसिद्धान्तपराणि दुःखार्णवनिमग्न-जगदुद्दिधीर्षुभिः परमकारुणिकै रेणुकादिभगवत्पादैः प्रणीतानीति विदितमेव श्रीकरभाष्यादिना। तथापि तेषामनुपलभ्यमानत्वात्, विद्यमानानां च श्रीकरभाष्यादीनामनवलोकनात्, वीरशैवसिद्धान्तपर-प्रस्थानत्रयभाष्याणामेवाभावात्, नैवेदं वीरशैवमतं वैदिकमिति मोमुह्यमानानां स्वसाम्याधिक्यशून्यवीरशैवसिद्धान्तगन्धाघ्राणकविवर्जितानां केषाचित् शिवेतरदेवतासु तत्साम्याधिक्यवादिनां शिवविद्वेषिणां पण्डितमानिनां मोहशमनाय वीरशैवतत्त्वाध्यवसायेनैव लोकयात्रां निर्वहन्तो वयं श्रीपूर्वाचार्यकृपया द्वैताद्वैत-विशिष्टाद्वैतपरोपनिषद्भाष्यादिकस्य सिद्धान्त(शिवागम)विरुद्धत्वात्, वेदवेदान्तस्यापि विरुद्धत्वात्, अत एव तदनुसारिस्मृति-पुराणयुक्त्यनुभवविरुद्धमित्यवबुध्य ईशावास्याद्युपनिषदो व्याचिख्यासवः सन्तः पूर्वाचार्यप्रदर्शितेन पथोपनिषद्वनं प्रविश्य तत्र शक्तिविशिष्टाद्वैतापरपर्यायलिङ्गाङ्गसमरस्यफलं साकल्येनाकल्य ईशावास्योपनिषत्-केनोपनिद्व्याख्यानम्, सिद्धान्तशिखोपनिषद्वीरशैवभाष्यं च वीरशैवपरकत्वेन प्रणिनीय सम्मुद्र्य प्रकटीकृत्य शिवभक्तिभाजां महान्तमानन्दं प्रापय्य मुण्डकोपनिषद्भाष्यं नीलकण्ठशिवाचार्यविरचितनीलकण्ठभाष्यकारिकारूप-क्रियासारस्य व्याख्यामपि 'ब्रह्मसूत्रवृत्ति' नाम्ना विरचय्य शिवभक्ति-शिवध्यान-शिवज्ञान-शिवव्रत-शिवार्चन-शिवार्पणादि-शिवधर्माचरणसमासादितशिवप्रसादरूपकुलिशेन प्रत्यूहाद्रिं विभज्य तत्तन्मन्त्रभाष्ये परव्याख्यानास्वारस्यं प्रदर्श्य समाप्य शिवस्य शिवभक्तिभाजां च सन्तुष्टिं कृतवन्त इति मन्यामहे। तस्माच्छिवश्रवणचेतसो निष्पक्षपातिनः शैवास्तदेतद्भाष्यं समालोक्य सान्द्रानन्दतुन्दिला भवेयुरित्याशास्महे। इति शम्।।



# सम्पादकीया टिप्पणी

## (प्रथमसंस्करणस्य)

विदितचरमेव सर्वेषां विदुषां यद् वेदान्तसिद्धान्तप्रतिपादितं वीरशैवमतं शक्तिविशिष्टाद्वैत-विशेषाद्वैत-शिवाद्वैत-विशिष्टाद्वैत-भेदाभेददर्शनप्रभृतिभिरभिधानैर्लोकविश्रुतमिति। उक्तं च सिद्धान्तशिखामणौ—

वेदसिद्धान्तयोरैक्यमेकार्थप्रतिपादनात् ।
प्रामाण्यं सदृशं ज्ञेयं पण्डितैरेतयोः सदा ।।

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ।। इति ।

सर्वश्रुतमेवैतत् यत् सर्वेषामास्तिकसिद्धान्तानां मूलं प्रस्थानत्रयमिति। तत्रोपनिषद् ब्रह्मसूत्रं भगवद्गीता च प्रस्थानत्रयत्वेनाभिधीयते। शङ्कर-रामानुज-मध्वादय आचार्याः इदं प्रस्थानत्रयमधिकृत्यैव भाष्याणि विलिख्य द्वैताद्वैतविशिष्टाद्वैतमतानि संस्थापयामासुः।

यद्यपि श्रीमद्रेणुकादय आचार्याः शिवागमप्रसिद्धाः प्रस्थानत्रयमधिकृत्यैव भाष्याणि विरचय्य वीरशैवसिद्धान्तसंस्थापका बभूवुरिति श्रीकरभाष्यादिषु श्रूयते, तथापि तानि भाष्याणि नाद्यावध्युपलभ्यन्ते।

श्रीपतिपण्डितभगवत्पाद(क्रि. श. १०४०)प्रणीते श्रीकरभाष्ये तावद् वीरशैवप्रतिपादकस्य नीलकण्ठभाष्यस्योल्लेखनमनेकशो दृश्यते। आनन्दगिरि(क्रि.श. ८००)विरचिते शङ्करविजये "शिरोलिङ्गधारी जङ्गमपुङ्गवः" इति, माधवाचार्य(क्रि.श. १४००)कृते शङ्करदिग्विजये "शिवसूत्र-ब्रह्मसूत्रभाष्यकर्ता" इति वर्णितो नीलकण्ठशिवाचार्य एव नीलकण्ठभाष्यकर्तेति विद्वद्भिराद्रियते।

तदिदं नीलकण्ठशिवाचार्यविरचितं ब्रह्मसूत्रभाष्यमिदानीं नोपलभ्यते यद्यपि, तथापि सुस्पष्टोऽयं विषयस्तद्व्याख्यारूपे क्रियासारे।

कारिकारूपस्यास्य क्रियासाराख्यब्रह्मसूत्रभाष्यस्यापि दुरवगाहत्वाद् विरचिता धर्मरत्नपदवीविभूषितैः लिं उमचिगीशङ्करशास्त्रिभिः सरलया गैर्वाण्या वाण्या ब्रह्मसूत्र-कृत्याख्या व्याख्या। सा च व्याख्या प्रथमाध्याये जगद्वाचित्वाधिकरणं यावदपूर्णैवोपलभ्यत इत्यतीव विषादास्पदं सहृदयानाम् ।

प्रदर्शितानि बहूनि वैशिष्ट्यान्यस्यां वृत्तौ। स्थालीपुलाकन्यायेन द्वित्राण्येवात्र निरूप्यन्ते — विशिष्टाद्वैतपदनिरुक्तिः (पृ. १३), द्वैताद्वैतात्मकशक्तिविशिष्टाद्वैत-पदस्यौचित्यम् (पृ. १६), वर्णाश्रमानुष्ठानविषये श्रीकरभाष्यकाराशयनिराकरणम् (पृ. २५), उपनयनस्य शिवदीक्षार्थकत्वप्रतिपादनम् (पृ. २६), शिवस्य गायत्रीमन्त्रवाच्यत्वम् (पृ. १०६), जीवमुख्यप्राणलिङ्गाधिकरणस्य इष्ट-प्राण-भावादित्रिविधलिङ्गो-पासनात्मकत्वसमर्थनम्। (पृ. ११०-११५), यज्ञोपवीतशब्दार्थनिर्वचनम् (पृ. १२७) इत्यादि।

इदं चावश्यमुल्लेखनीयं यत् — "स्त्रीशूद्रौ नाधीयेताम्" इति वाक्यमनुसृत्य प्रचलिते शास्त्रार्थविषये तावत् शास्त्रिणां खचिताभिप्रायो वीरशैवसिद्धान्तसारमेव गर्भीक्रियते। अतस्तेषां बहुश्रुतत्वं हृदयवैशाल्यं च सम्यक् प्रकटीकृतम्। उक्तं च तत्रैव — "नहि शूद्रादीनां संस्कारानर्हत्वं कुत्रापि प्रत्यक्षं श्रुतिषु दृश्यते। अत एव शूद्रादिसंस्कारानर्हत्वादिभिस्तेषां संस्काराभावे स्मृतिरेव प्रमाणत्वेनोपन्यस्यते। नैतद्रोचते मनुष्यमात्रहितचिन्तकेभ्यो निष्पक्षपातबुद्धिभ्यः। "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" इति सूत्रेण मनुष्यमात्रस्य ब्रह्मविद्यायामधिकारस्य सूत्रकाराभिप्रेतत्वेऽपि केषाञ्चिदधिकारः केषाञ्चिन्नेति कथनं रागद्वेषप्रयुक्तमिति वक्तुं शक्यते" (पृ. ९४)। इत्युक्त्वा शास्त्रोद्देशभङ्गकारिणां पूर्वेषामपि व्याख्यातृणामाशयः सप्रमाणं निराकृतः। उक्तं च तत्रैव — "नन्वस्मिन्नधिकरणे कारिकाटीकाकारेण निर्वाणमन्त्रिणा श्रीकरभाष्यकारेण श्रीपतिपण्डितेन च शूद्रादीनां संस्काराभावस्य दर्शितत्वात् शिवदीक्षासम्पन्नत्वात् तदभिप्रायानुसारेणैवोचित्यात् किं तदभिप्रायविरुद्धव्याख्यानेन" इत्याशङ्कायां वीरशैवसिद्धान्तसम्मतं स्पष्टमुत्तरं तत्रैवोक्तम्। तद्यथा —"निर्वाणमन्त्रिणा कारिकाकारतात्पर्यगन्धलेशस्याप्यज्ञातत्वात्, क्रियासारस्य साकल्येनाविचारितत्वाद् मायावादिभिरिव शूद्रादिसंस्कारानर्हत्वं दर्शितम्। श्रीकरभाष्यकारेणापि पूर्वापरसूत्रपर्यालोचनाभावादेव दर्शितमिति मद्व्याख्यानपरिशीलनचतुरैर्ज्ञायत एव" (पृ. १९६) इति ।

एवमादिषु बहुषु विषयेषु वीरशैवसम्मताः सर्वमान्या उदात्ताशयाः शास्त्रिमहोदयैः प्रकाशिताः। भाष्यास्यास्यापूर्वत्वमर्थस्वारस्यं च सहृदयैराकलनीयमिति निवेद्य विरम्यते। अस्मिन् सुश्लाघ्ये कर्मणि मां प्रेरितवद्भ्यः श्रीश्रीशिवप्रकाशशिवाचार्येभ्यः कार्तज्ञ्यपूर्वकाः प्रणामाः समर्प्यन्ते।

३१.३.१९७४
मैसूरु

एम्. जि. नञ्जुण्डाराध्यः
सम्पादकः





श्रीमद् काशी जगद्गुरु विश्वाराध्य ज्ञानसिंहासनाधीश्वर

**श्री १००८ जगद्गुरु डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी**

का

# आशीर्वचन

## (द्वितीयसंस्करणस्य)

भारतीय धर्म-दर्शनों में वीरशैव धर्म-दर्शन का एक विशिष्ट स्थान है। वेदान्त के प्रस्थानत्रय के रूप में विद्यमान उपनिषत्, ब्रह्मसूत्र और भगवद्गीता के ऊपर विभिन्न आचार्यों ने अपने-अपने सिद्धान्त के अनुसार भाष्यों की रचना की है। वीरशैव आचार्यों ने भी इस प्रस्थानत्रयी के ऊपर अपने सिद्धान्तानुरूप भाष्य लिखें हैं।

ब्रह्मसूत्रों के ऊपर वीरशैवों के दो भाष्य मिलते हैं। एक है नीलकण्ठ शिवाचार्य जी का नीलकण्ठ-भाष्य और दूसरा श्रीपति पण्डिताराध्य जी का श्रीकर-भाष्य। वर्तमान समय में श्रीकर-भाष्य उपलब्ध है, किन्तु नीलकण्ठ-भाष्य अनुलपब्ध हो गया है। इस भाष्य के रचयिता नीलकण्ठ शिवाचार्य आद्य शङ्कराचार्य के समकालीन थे। यह विषय शङ्करदिग्विजय के १५वें सर्ग में प्रतिपादित नीलकण्ठ शिवाचार्य और शंकराचार्य जी के परस्पर शास्त्रार्थ प्रसंग से अवगत होता है।

कालान्तर में १४ वीं शताब्दी में उसी नाम के दूसरे नीलकण्ठ शिवाचार्य सुप्रसिद्ध हुए। इन्होंने पूर्वोक्त नीलकण्ठ-भाष्य के ऊपर कारिका के रूप में व्याख्या लिखी। यह व्याख्या 'क्रियासार' के रूप में अभी उपलब्ध है। इस क्रियासार के ऊपर उमचिगी मळेमठीय श्री शंकर शास्त्रीजी के द्वारा २० वीं शताब्दी में वृत्ति लिखी गयी। इसका नाम ही शाङ्करी वृत्ति है। श्री शंकर शास्त्रीजी मैसूर महाराजा के आस्थान विद्वान् थे। साथ ही साथ उज्जयिनी महापीठ के भी आस्थान विद्वान् थे। क्रियासार के अनुरूप ब्रह्मसूत्र के ऊपर वृत्ति लिखने के उद्देश्य से इन्होंने शाङ्करी वृत्ति लिखी। ब्रह्मसूत्र के सभी अध्यायों के ऊपर वृत्ति लिखने के संकल्प से आपने कार्यारम्भ किया, किन्तु उन्होंने अपने इस कार्य को पूर्ण किया या नहीं यह निश्चय करना कठिन है, क्योंकि वर्तमान समय में प्रथमाध्याय के चतुर्थ पाद तक ही वृत्ति उपलब्ध है। अवशिष्ट भाग रचा गया या नहीं? अथवा रचना के बाद विनष्ट हुआ, इसके बारे में संदेह बना रहता है। जब ब्रह्मसूत्र शाङ्करी वृत्ति को सम्पूर्णानन्द संस्कृत विश्वविद्यालय की शास्त्री परीक्षा में पाठ्यपुस्तक के रूप में स्वीकृत किया गया है, तब १९७४ में मैसूर के आस्थान विद्वान् एम. जी. नञ्जुण्डाराध्य जी के द्वारा प्रकाशित इस ग्रन्थ के अनुपलब्ध होने के कारण, उस पूर्व प्रकाशित प्रति को शुद्ध करके काशी हिन्दु विश्वविद्यालय के प्राच्यविद्या धर्मविज्ञान संकाय के भूतपूर्व प्राध्यापक पं. केदारनाथ त्रिपाठी जी ने संशोधन करके सम्पादित किया है। इस ग्रन्थ को काशी जंगमवाड़ी मठ के शैवभारती शोध प्रतिष्ठान के द्वारा 'महाशिवरात्रि' के पावन पर्व काल में प्रकाशित करते हुए हम अपार हर्ष का अनुभव कर रहे हैं।

शिवैक्य पं० शंकर शास्त्री जी के द्वारा रचित ईश, केन, मुण्डक और सिद्धान्तशिखोपनिषद् के भाष्यों को भी यह शोध प्रतिष्ठान संशोधन कराके क्रमश: प्रकाशित करा रहा है। इस महान् कार्य में काशी के अनेक विद्वानों का सहयोग सहकार प्राप्त हो रहा है। विशेषत: शैवभारती शोध प्रतिष्ठान के निदेशक राष्ट्रियपण्डित व्रजवल्लभ द्विवेदीजी विशेष अभिनन्दन के पात्र हैं। हम प्रस्तुत ग्रन्थ के संशोधक व सम्पादक पं० केदारनाथ त्रिपाठी जी के आयुरारोग्य की मंगलमय कामना करते हैं कि उनके द्वारा इसी तरह साहित्य की सेवा निरन्तर होती रहे। विद्वानों के परिश्रम द्वारा सम्पादित इन ग्रन्थों का स्वाध्याय करके सभी अपनी ज्ञानशक्ति को बढ़ावें, ऐसी हमारी अभिलाषा है। इस कार्य में प्रत्यक्ष अप्रत्यक्ष रूपेण निरत हुये सभी लोगों को विशेषकर त्रिविध सूचियों के निर्माता श्री सिद्धराम देव हिप्परगी और शिव-शक्ति कम्प्यूटर प्रोसेस में कार्यरत श्री चिदानन्द ओमशिवय्या हिरेमठ (कसगी), श्री राजशेखर हिरेमठ और इसके व्यवस्थापक श्री जी. सी. केण्डदमठ को अनन्त मङ्गलमय आशीर्वाद।

**ॐ शान्तिः ॐ शान्तिः ॐ शान्तिः**



# भूमिका

## (द्वितीयसंस्करणस्य)

अद्वैतदर्शनरत्नानामेकलग्रन्थननैपुणीमादधतां महामुनिबादरायणनिर्मितब्रह्मसूत्राणामुपरि श्रीउमचिगीवृष्टिमठाधीशेन श्रीमच्छङ्करशास्त्रिणा विरचितः 'शाङ्करीवृत्ति'नाम्ना प्रसिद्धिमुपगतो ग्रन्थो वीरशैवदर्शनसिद्धान्तस्य सयुक्तिनिरूपणपरः साम्प्रतमुपलभ्यमानोऽसमग्रोऽपि सन् समासेन शक्तिविशिष्टाद्वैतवादस्य प्रायः समग्रं सिद्धान्तजातं व्यनक्ति। वृत्तिग्रन्थोऽयं प्रथमाध्यायस्य चतुर्थपादान्त एव मुद्रित उपलभ्यते, न सम्पूर्णश्चतुर्थाध्यायान्तं यावदित्यत्र न हेतुं विद्मः। यद्यप्यस्य ग्रन्थस्य षट्सप्ततितमे पृष्ठे स्वयमुक्तं वृत्तिकृता — "अंशो नानाव्यपदेशात्" (२.३.४३) इति सूत्रव्याख्यानावसरे वक्ष्यते" इति। अनया वृत्तिकृदुक्त्या संभाव्यतेऽग्रिमाध्यायानामप्युपरि वृत्तिर्लिखिता भवेत् श्रीशङ्करशास्त्रिणेति। अतस्तत्सन्दर्भेऽपि प्रयत्नो विधेयो विद्वद्भिरिति मन्ये।

इयं वृत्तिर्ब्रह्मसूत्राणि व्याख्यातुं प्रवृत्ता क्रियासाराभिधं कारिकात्मकं ग्रन्थमनुगच्छतीत्येतद्ग्रन्थोल्लिखितैस्तदुद्धरणैर्यत्र कुत्र श्रीकरभाष्यकृदादिव्याख्याननिराकरणे तन्निदर्शनीकरणेन चाध्यवसातुं शक्यते।

एतत्संस्करणमुद्रणात् पूर्वमादर्शभूतो वृत्तिग्रन्थो ज्ञानसिंहासने काशीस्थजङ्गमवाडीमठे पुस्तकालये सुरक्षितः प्रायः प्रतिपङ्क्ति त्रुटिग्रस्तोऽस्तीत्यालक्ष्य एतत्पीठाधीश्वरैर्जगद्गुरुविश्वाराध्यप्रतिनिधिभिः श्रीचन्द्रशेखरशिवाचार्यमहास्वामिभिस्तस्याभिनवप्रकाशनमावश्यकं मन्वानैस्तत्परिशोधनपूर्वकं तत्सम्पादनकार्यभारो मयि न्यधायि। नूनमनेन गुरुणा कार्यभारेण ममापि गौरवं वर्धितं जगद्गुरुभिरिति तान् प्रति सबहुमानमनुग्राह्यत्वमेव निजं मन्ये।

एतद्ग्रन्थप्रतिपाद्यो मुख्यो विषयः शक्तिविशिष्टाद्वैतवादो ग्रन्थत एव सपरिकरो विदितो भवेदिति नेह प्रतन्यते। एवमेतत्सिद्धान्तस्वरूपस्य एतदैतिहासिकत्वस्य च सामान्यतोऽवबोधयाय एतत्पीठस्य वर्तमानाधीश्वराणां श्रीचन्द्रशेखरमहास्वामिशिवाचार्याणां

"वीरशैव धर्म-दर्शन का संक्षिप्त इतिहास" नामकं पुस्तकं महदुपयोगि विद्यत इति नूनं तदवलोकनीयमास्ते। प्रस्तुतग्रन्थकर्तुर्व्यक्तित्वकृतित्वविषयमपि श्रीजगद्गुरवः स्वाशीर्वचनप्रसङ्गेऽवश्यमिह प्रकाशयेयुरिति समुपयुक्तं मन्ये।

एवं सत्यपि निगमवदेवाभ्यर्हिततमे विश्रुते 'सिद्धान्तशिखामणौ' आगमग्रन्थे व्याससूत्रोपरि श्रीकण्ठाचार्यभाष्यनिर्माणे प्रस्तुतग्रन्थकर्तुश्च वृत्तिनिर्माणे किमुद्देश्यमिति विमर्शे ब्रूमः—

प्रथमं तु सर्वाण्येवास्तिकदर्शनानि वैदिकानि सन्ति। तेष्वपि पूर्वोत्तरमीमांसादर्शने वेदार्थनिरूपणपरे एव, न श्रुतिमवधूय केवलं तर्केष्वायतेते। इत्थं वेदान्तदर्शनान्यपि नैकशाखानि ब्रह्मसूत्रमाधृत्य स्वस्वाभिमतसिद्धान्तं साधयितुमुद्युञ्जते। कामं तेषु व्याख्यानभेदो भवतु नाम। एवं च सर्वाणि तानि श्रुत्युपज्ञानि सन्ति। एतेन च रहस्यद्वयमाभाति — प्रथमं तावत् स्वस्य वैदिकत्वेन स्वप्रामाण्ये प्रकर्षस्थापनम्, तत्र श्रुतीनां महत्त्वाङ्गीकारश्च। द्वितीयं च ब्रह्मसूत्राणां ससंरम्भव्याख्यानतस्तेषामभ्यर्हिततत्वस्वीकारेण सह तत्प्रतिपाद्यब्रह्मण एव परतत्त्वभावेनोपास्यत्वसमर्थनं स्वस्य दार्शनिकस्वरूपप्रस्थापनं चेति। तथा च श्रुतिप्रामाण्ये न कस्यापि दर्शनस्य वैमत्यम्, न वा ब्रह्मसूत्रैर्निरूपणीये ब्रह्मणि च कस्यापि वैमत्यमस्ति। तद् ब्रह्म विष्णुर्वा शिवो वा भवतु, शक्तिमतोऽभेदात् शक्तिर्वा भवत्विति। अतः स्फुटमिदं सर्वदर्शनानां श्रुतिषु ब्रह्मतत्त्वे च सामानाधिकरण्यम्। इदमेव हि समानमास्तिकत्वमेषां प्रसिद्धम्। "ब्रह्मैवेदं सर्वम्", "ब्रह्मविद् ब्रह्मैव भवति" इति हि वैदिकसंस्कृतेः सामान्यादेशः। विशेषस्तु — "देवो भूत्वा देवं यजेत", "यो यच्छ्रद्धः स एव सः" इत्यादिः। भ्रमरकीटन्यायं नदीसमुद्रन्यायं घृतकाठिन्यादिन्यायं चोदाहृत्य स्फुटीकृतं चैतद् वृत्ताविति।

जङ्गमवाडीमठाधीश्वराणां विश्वाराध्यजगद्गुरुश्रीचन्द्रशेखरमहास्वामिनां निरन्तरमेवंविधं शास्त्रसमुद्धारादिविविधलोककल्याणकार्यव्यापृतत्वमालक्ष्य भृशं प्रसीदामः, तेषां दीर्घायुष्ट्वाय सुस्वास्थ्याय च भवानीनाथं श्रीविश्वनाथं प्रार्थयाम इति शिवम्।।

महाशिवरात्रि, २०५४ — केदारनाथत्रिपाठी



# विषय-सूची



### ग्रन्थभागः

## परशिष्टभागः





श्रीशिवाभ्यां नमः

# ब्रह्मसूत्रशाङ्करीवृत्तिः

## प्रथमाध्याये प्रथमः पादः

सृष्ट्यादिपञ्चकृत्यानां विधातृभिरुपासितम् ।
निर्मलं शिवनामानं वन्दे साम्बं महेश्वरम् ॥१॥

सद्योजातादिसंजातान् सद्यो निर्वाणदायकान् ।
सद्यः सिद्धिप्रदान्नौमि रेणुकादीन् जगद्गुरून् ॥२॥

शिवानुग्रहसंजातशङ्कराचार्ययोगिने ।
चन्द्रमौलीश्वरं लिङ्गं दत्तवन्तं जगद्गुरुम् ॥३॥

सिद्धसंघशिखारत्नं रेवणाराध्यदेशिकम् ।
चिन्तामणिं स्वभक्तानां वन्दे चिन्तितसिद्धये ॥४॥

शिवानन्दाख्यमाहूय वीरपीठप्रभुं मुदा ।
चक्रे विश्वगुरुं यस्तं सिद्धलिङ्गं नमाम्यहम् ॥५॥

वीरपीठसमारूढं शिवाचार्यं जगद्गुरुम् ।
श्रीशिवानन्दराजेन्द्रं वन्दे राजेन्द्रपूजितम् ॥६॥

दुर्वादिगर्वेभमृगेन्द्ररूपं शर्वोक्तसर्वागमसारदीपम् ।
दुर्वारकामादिविलासलोपं विध्वस्तभक्ताखिलकर्मलेपम् ॥७॥

श्रीवीरशैवोदधिपूर्णचन्द्रं श्रीवीरसिंहासनदेशिकेन्द्रम् ।
सिद्धान्तसुज्ञानमहासमुद्रं नमामि सद्भक्तवितीर्णभद्रम् ॥८॥

मुख्यं श्रीनीलकण्ठोक्तमुपदेशचतुष्टयम् ।
दृष्ट्वा व्यासीयसूत्राणां सम्यग् वृत्तिर्वितन्यते ॥९॥

कोट्टूरेश्वरनामकं प्रभुवरं विघ्नेभकण्ठीरवं
सद्भक्तावलिपालकं श्रुतिततेस्तत्त्वार्थसंबोधकम् ।
नत्वा श्रीमहिशूरभूपतिकृपाछायाश्रितः शङ्करो
व्यासीयाखिलब्रह्मसूत्रविवृतिं कुर्वे शिवप्रीतये ।।१०।।

अथ श्रीमद्वीरशैवविद्याप्रतिपादकसाक्षाच्छिवाविर्भूतशिवसूत्रादीनां वीरशैवादरणीयत्वेऽपि व्यासीयसूत्राणामपि शिवज्ञानमूलकत्वात् शिवधर्मप्रतिपादकवेदान्तानुकूलत्वाच्च तत्सूत्राभ्युपगमे न कोऽपि दोषसंभव इति मत्त्वा श्रीमन्नीलकण्ठभगवत्पादाचार्यो भाष्यमचीकरत्। तस्मादेव तदीयभाष्यार्थकारिकाभिः संगृहीतवानपरो नीलकण्ठशिवाचार्यः। कारिकार्थस्यापि दुर्गमत्वाद् भाष्यस्यानुपलभ्यत्वात् कारिकामनुसृत्य क्रियते सूत्रवृत्तिरिदानीम्।

न चेतरभाष्यादीनां व्याससूत्रार्थप्रकाशकत्वेऽपि तदनुसरणं किं न क्रियत इति वाच्यम्, तेषां तत्तात्पर्यप्रतिकूलत्वात्। तथाहि—"अथातो ब्रह्मजिज्ञासा" इत्यत्राध्यासस्यासूत्रितत्वेऽपि यत्तस्य प्रतिपादनं तत्सूत्रविरुद्धम्। न चाद्यसूत्रस्य विषयप्रयोजनादिसूचकत्वाद्विषयस्य च जीवब्रह्मणोः स्वरूपैक्यलक्षणस्य तज्ज्ञानस्य चाध्यासाधीनत्वात् सोऽर्थात् सूत्रित एवेति वाच्यम्, जीवब्रह्मणोः स्वरूपैक्यस्यैवाभावेन तस्य विषयत्वासंप्रतिपत्तेः। नहि जीवब्रह्मणोः स्वरूपैक्यं क्वचित् सूत्रितम्, प्रत्युत "अंशो नानाव्यपदेशात्" इति जीवो ब्रह्मणोंऽशो भिन्नाभिन्नश्च, अग्नेर्विस्फुलिङ्ग इवेत्युक्तम्। नह्यग्निविस्फुलिङ्गयोः स्वरूपैक्यमस्ति, येन जीवब्रह्मणोरपि भवेत्।

तथा "जन्माद्यस्य यतः" इति सूत्रेण ब्रह्मणो जगत्कारणत्वं लक्षणमुक्तम्। किंविधं तत्कारणत्वमित्याकाङ्क्षायां "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादिना निमित्तत्वमुपादानत्वं चेत्युक्तम्। तस्मादेकब्रह्मण एवोभयविधकारणत्वे सूत्रिते कैश्चिदविद्योपादानमित्युक्तम्, अन्यैः सूक्ष्मभूतपञ्चकमुपादानमिति, अपरैः प्रकृतिरुपादानमिति। तदेतदुपादानान्तराभिधानं सूत्रविरुद्धम्।

तथा "शास्त्रयोनित्वात्" इति ब्रह्मणः शास्त्रवेद्यत्वे सूत्रार्थे सत्यपि कैश्चिदवेद्यत्वं सूत्रविरुद्धमेवोक्तम्।

तथा "ईक्षतेर्नाशब्दम्", "गौणश्चेन्नात्मशब्दात्", "अदृश्यत्वादिगुणको धर्मोक्तेः", "द्युभ्वाद्यायतनं स्वशब्दात्", "शब्दादेव प्रमितः" इत्यादिभिः सूत्रैरसाधारणैर्ब्रह्मधर्मैर्ब्रह्मवाचकशब्दैश्च ब्रह्मनिर्णये क्रियमाणेऽपि ब्रह्म निर्धर्मकं कस्यापि शब्दस्य वाच्यं न भवतीत्यभिधानं सूत्रविरुद्धम्। न च ब्रह्मणि वास्तवधर्माभावेऽप्यारोपितधर्माणां

संभवान्न विरोध इति वाच्यम्, जगत्कारणत्वादिधर्माणामारोपितत्वस्य क्वाप्यसूत्रितत्वात्, जगत्कारणत्वादीनामन्यत्राप्रसिद्धतया आरोपासंभवात्, वेदान्तानामारोपितधर्मविषयकत्वे तेषामप्रामाण्यापातात्।

न च देहात्मप्रत्ययवद् यावदात्मतत्त्वज्ञानं प्रामाण्यमुपपद्यत इति वाच्यम्, देहात्मप्रत्ययस्य लोकायतिकं विना केनापि प्रामाण्यस्याभ्युपगतत्वाभावात्। नहि लोकायतिकं विना देहात्मप्रत्ययस्य केनचित्प्रामाण्यमभ्युपगम्यते। नहि यत्प्रमाणं तत्कदाचिदप्यप्रमाणं भवितुमर्हति, घटदर्शने चक्षुरादिवत्। नहि बाधिताबाधितविषयकाप्रामाण्यप्रामाण्ये एकत्र संभवतः। बाधो हि नाम त्रैकालिकनिषेधः। नहि यत्र यस्य त्रैकालिकनिषेधः, तत्रैव तद्भावः संभवति। तस्माद्यत् प्रमाणं तत्सदैव प्रमाणम्, यदप्रमाणं तत्सदैवाप्रमाणम्। तद्वद्वेदान्ता अपि सदैवाप्रमाणं चेत् तदर्थनिर्णायकविचारशास्त्रानर्थक्यम्, नास्तिकत्वापत्तिश्च स्यात्।

तथा "आनन्दमयोऽभ्यासात्" इत्यत्रानन्दमयस्य ब्रह्मत्वे सूत्रिते तस्याब्रह्म-त्वाभिधानं सूत्रविरुद्धम्। न च "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति वाङ्मनसातीतत्वेन ब्रह्मणो निर्विशेषत्वप्रतिपादनात् प्रियशिरस्कत्वादिविशिष्टा-नन्दमयस्य न ब्रह्मत्वमिति वाच्यम्, "यतो वाचो निवर्तन्ते" इति वाक्येन ब्रह्मणो वाङ्मनसातीतत्वस्याप्रतिपादितत्वात्, "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति श्रुतेरसाङ्गत्यापत्तेः। नहि वाङ्मनसातिरिक्तमानगम्यत्वं ब्रह्मणः संभवति, ब्रह्मणि मानान्तराप्रवृत्तेः ; "नावेदविन्मनुते तं बृहन्तम्", "मनसैवानुद्रष्टव्यम्" इत्यादि-शास्त्रविरोधाच्च। तस्मादानन्दमयाधिकरणे निर्विशेषब्रह्मप्रतिपादनं सूत्रविरुद्धं श्रुतिविरुद्धं च।

तथा—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र कार्यस्य कारणाभिन्नत्वस्य सूत्रितत्वेऽपि कैश्चित् कारणव्यतिरेकेण कार्यस्यासत्यत्वं मिथ्यात्वमुदाहृतम्, तदपि सूत्रविरुद्धम्। नह्यनन्यत्वशब्दोऽसत्त्ववाची किन्त्वभेदवाची । किञ्च, यदि कारणव्यतिरेकेण कार्यमेव न भवेत्, तदा कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थ्यते। अभेदे हि कार्यकारणयोः कारणे विज्ञाते कार्यं विज्ञातमिति शक्यते वक्तुम्, विज्ञातकारणाभिन्नत्वात् कार्यस्य। असत्त्वे पुनः कार्यस्य कथं कारणविज्ञानेन सर्वकार्यस्य विज्ञानम्, सर्वस्यैवाभावात्। अनेन सूत्रेण कार्यस्य कारणाभिन्नत्वमेवोक्तम्, न तु कारणव्यतिरेकेण कार्यस्यासत्त्वमिति ध्येयम्। कार्यकारणयोरत्यन्ताभेदमप्यत्यन्तभेदमपि न ब्रूमो वयम्, किन्तु भेदाधिकरणे अभेदम्। अहेः कुण्डलम्, अग्नेर्विस्फुलिङ्गमित्यादाविव

कारणरूपेणाभेदं तत्तत्कार्यरूपेण भेदं वदामः। केचित्तु कार्यकारणयोरत्यन्ताभेदमाहुः। तथाहि मृदि घटो नाम द्रव्यान्तरं नोत्पद्यते, किन्त्वेकमेव द्रव्यं पिण्डावस्थां विहाय घटावस्थामापद्यते। पुनश्च घटावस्थां विहाय कपालावस्थामित्यादि। ततश्चावस्थान्तरापत्तिरेव द्रव्योत्पत्तिः, अवस्थाप्रहाणमेव विनाश इति। तन्न, किमवस्था द्रव्यादत्यन्तभिन्ना, उतात्यन्तमभिन्ना, आहोस्वित् भिन्नाभिन्ना वा? आद्ये कथमेकविज्ञानेन सर्वविज्ञानम्? द्रव्ये ज्ञातेऽप्यवस्थानामज्ञानात्। न चैकविज्ञानेन सर्वद्रव्यविज्ञानमेव सर्वज्ञानं न त्ववस्थाज्ञानमपि सर्वज्ञानपदेनोक्तमिति वाच्यम्, संकोचे कारणाभावात्, द्रव्यस्यैकत्वेन सर्वत्वानुपपत्तेः। द्वितीये कथमवस्थानामागन्तुकत्वम्, तदन्तराद्द्रव्यादत्यन्तमभेदात्। तृतीये किमपराद्धं घटादिना द्रव्येण लोकानुभवसिद्धेन। किञ्च, यद्यवस्थान्तरापत्तिरेवोत्पत्तिस्तदा अवस्थानामुत्पत्तिर्न स्यात्, अवस्थान्तराभावात्, अवस्थानामवस्थान्तरस्वीकारेऽनवस्था स्यात्। तथा "ज्ञोऽत एव" इति जीवस्य ज्ञातृत्वे सूत्रितेऽपि यज्ज्ञानरूपाभिधानम्, तदपि सूत्रविरुद्धम्। "उत्क्रान्तिगत्यागतीनाम्" इति जीवस्याणुत्वे सूत्रितेऽपि तस्य महत्त्वाभिधानं सूत्रविरुद्धम्।

तथा "कर्ता शास्त्रार्थवत्त्वात्" इत्यादिना आत्मनः कर्तृत्वे सूत्रितेऽकर्तेत्यभिधानं सांख्यमताभिप्रेतमेव। न च जीवस्यौपाधिककर्तृत्वाद् बुद्धेरेव स्वाभाविककर्तृत्वाद् जीवस्य वास्तवकर्तृत्वाभाव एवेति वाच्यम्, लोकवेदयोः करणतया प्रसिद्धाया बुद्धेः कर्तृत्वस्यैवाभावात्।

तथा "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति कर्मसापेक्षाया विद्याया मोक्षहेतुत्वे प्रतिपादितेऽपि कर्मनिरपेक्षितात् केवलाज्ज्ञानान्मोक्षप्रतिपादनं सूत्रविरुद्धम्। "समाना च सृत्युपक्रमात्" इत्यत्र विद्वदविदुषोरुत्क्रान्तिसाम्यप्रतिपादनेऽपि कस्यचिद्विदुष उत्क्रान्त्यभावाभिधानं सूत्रविरुद्धम्।

स्मर्यते च महाभारते विदुषो गतिः—"शुकः किल वैयासिकिरादित्यमण्डलमभिप्रतस्थे" इति। तथा—"शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरिक्षगः। दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ।।", तथा—"सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा मार्गे प्रमुह्यन्त्यपदस्य पदैषिणः।।" अपदस्य स्वस्थानाद्धृदयादुत्क्रान्तत्वात् पदैषिणः परमपदप्रेप्सोर्मार्गे देवयाने देवा अपि मुह्यन्तीति मार्गस्य दुर्विज्ञेयतोच्यते, न तु मार्गाभावः; "अथ य एतौ पन्थानौ न विदुः, ते कीटाः पतङ्गाः" इति मार्गद्वयभ्रष्टानामधोगतिश्रवणात्। विदुषः शरीरादुत्क्रान्तिविरहाभिधानं सूत्रविरुद्धम्। न च "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति ज्ञानव्यतिरिक्त-

मार्गान्तरनिषेधान्न देवयानः पन्था अपेक्षितव्य इति वाच्यम्, मार्गानपेक्षायामयना-येत्युक्तगमनानुपपत्तेः। न चायनायेति गमनं नाभिधीयते, किन्तु ब्रह्मप्राप्तिरेवेति वाच्यम्, "इण् गतौ", "अय पय गतौ" इति स्मरणात्, तदतिक्रमे कारणाभावाच्च, मार्गमात्रनिषेधेऽन्य इति विशेषणानर्थक्याच्च। न च पन्था इत्यनेन मार्गो नोच्यते, किन्तु साधनमेव, तथा च साधनमात्रनिषेधे ज्ञानस्यापि निषेधप्रसङ्गादन्यविशेषणमपि सार्थकमेवेति वाच्यम्, पथिशब्दस्य मुख्यार्थसंभवे लक्षणाश्रयणस्यान्याय्यत्वात्। तस्माद् ब्रह्मविदां देवयानाभाववचनमयुक्तमेव।

तथा—"प्रदीपवदावेशस्तथा हि दर्शयति" इत्यत्र मुक्तस्यानेकशरीरपक्षे किं तानि शरीराणि सात्मकानि, उत निरात्मकानीति पूर्वपक्षं कृत्वा यथा दीपोऽनेकदीपभाव-मापद्यानेकवर्तिष्वाविशति विकारशक्तियोगात्, एवं मुक्त एकोऽप्यैश्वर्यशक्तियोगादनेकानि शरीराण्याविशतीति सिद्धान्तितमन्यैः। तदेतज्जीवस्य विभुत्ववादिनामसमञ्जसम्। एवमन्यत्र सूत्रस्यापि विरोधोऽस्त्येव। विस्तरभयादुपरम्यते।

तदेवं सूत्रानुसारिव्याख्यानानामुत्सन्नत्वेऽपि सूत्रानुसारिव्याख्यानुसारि-क्रियासारकारिकारूपाणां प्रथम-द्वितीय-तृतीय-चतुर्थोपदेशानां विद्यमानत्वाद् विद्यमानानां चेतरव्याख्यानानां सूत्राननुसारित्वात् सूत्रानुसारिकारिकानुसारिणी वृत्तिरारभ्यते। न च विनिगमनाविरहादितरव्याख्यानामेव सूत्रानुसारित्वमस्त्विति वाच्यम्, सूत्रकारेणापीतर-व्याख्यानानां स्वसूत्राननुसारित्वस्योक्तत्वात्। तथाहि —

एवं मतानि बहुशो भुवि विस्तारितान्यपि ।
समुपेत्य तदा व्यासः प्रार्थयामास शङ्करम् ।।
मतानि विविधान्येव समुत्पन्नानि शङ्कर ! ।
मत्कृतानां च सूत्राणामयथानयनं कृतम् ।।
एवमेवेति निश्चित्य कुर्वन्ति कलहं मिथः ।
त्वत्प्रसादैकलभ्यस्य सूत्रजालस्य शङ्कर ! ।।
यथापूर्वं त्वया कार्यं मत्सूत्रार्थविवेचनम् ।
इति तेन प्रार्थितः सन् दयालुः पार्वतीपतिः ।।
नीलकण्ठशिवाचार्यनाम्ना भाष्यमचीकरत् ।
विशिष्टाद्वैतसिद्धान्तप्रतिपादकमुत्तमम् ।। इति।

(क्रि० सा०, उ० १.२८–३२)

कारिकाकारस्य नीलकण्ठभाष्यानुसरणस्याऽपि —

मयाऽपि तस्य तात्पर्यं श्रोतृणां सुखबुद्धये ।
कारिकारूपतः सर्वं क्रमेणैव निबध्यते ।।

(क्रि० सा० १.३३)

इति तद्वाक्येनैव ज्ञायमानत्वात् तदनुसारिणी वृत्तिः सूत्रानुसारिण्येव। कारिकार्थस्यापि दुर्गमत्वात् तदविरुद्धवृत्तेः सार्थक्यं ज्ञातव्यम्।

अनुबन्धचतुष्टयमन्तरा शास्त्रेऽध्येतृप्रवृत्त्यदर्शनात् तस्य तत्प्रवृत्तिजनकत्वाच्च तन्निरूपणमावश्यकम्। तथा च—अष्टावरणपञ्चाचारतत्परः षट्स्थलब्रह्मशब्दितपरशिवजिज्ञासुरधिकारी। विषयस्तु शक्तिविशिष्टाद्वैतं ब्रह्म। शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। शक्तिविशिष्टपरशिवात्मैक्यज्ञानं साक्षात् प्रयोजनम्, परम्परया मोक्ष एव। एतन्मोक्षप्रयोजकम् "अथातो ब्रह्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्तं शास्त्रम्। अतस्तन्मुमुक्षूणां तृणीकृतस्वर्गादिफलानामस्माकमभ्यर्हिततरम्।

केचित्तु जीवब्रह्मणोः स्वरूपत ऐक्यमेव शास्त्रस्य विषय इत्याहुः। तथा हि—अविद्याप्रतिबिम्बमायाप्रतिबिम्बयोर्जीवत्वेश्वरत्वे अभ्युपेत्य तत्रोपाधिनाशे प्रतिबिम्बयोर्बिम्बमात्रत्वान्न वस्तुतो जीवब्रह्मणोर्भेद इत्यैक्यमेवेति प्रतिबिम्बवादमन्तःकरणावच्छिन्नचैतन्यं जीवो मायावच्छिन्नचैतन्यमीश्वर इत्यवच्छिन्नवादं च स्वीकुर्वन्ति। घटाद्यवच्छिन्नाकाशानामवच्छेदकनाशे महाकाशमात्रत्ववद् ब्रह्मात्मैक्यसाक्षात्कारनिवर्तितायामविद्यायां तत्कार्यान्तःकरणादीनामवच्छेदकानां नाशे चैतन्यमात्रावशेषादैक्यमेव विषय इति। इमौ प्रतिबिम्बवादावच्छिन्नवादावपि न सङ्गच्छेते, त्वंपदवाच्यस्य प्रतिबिम्बरूपस्य जीवस्य दर्पणगतमुखस्येव मिथ्यात्वात्। बाह्यवास्तवमुखं दर्पणगतमुखं न भवतीति वाक्यवत् 'तन्न त्वमसि' इति श्रुतेरदर्शनात्। अपि च—यत्र यदस्ति तत्र तत्प्रतिबिम्बो नास्ति दर्पणरेखावत्, जलप्रविष्टमुखवच्च तत्रैव मग्नस्य तत्रैव प्रतिफलनासंभवात्। किञ्च, न च ब्रह्मणः प्रतिबिम्बः संभवति नीरूपत्वादिति। नीरूपस्याप्याकाशस्य प्रतिबिम्बदर्शनादिति चेन्न, रूपसहितसूर्याद्यालोकप्रतिबिम्बस्यैवाकाशप्रतिबिम्बत्वेन ग्रहणात्, अन्यथा नीरूपवायुकालादीनामपि प्रतिबिम्बापत्तेः।

एवमवच्छिन्नवादोऽपि लोहादिप्रविष्टसूच्यादेः स्वकार्यनिर्मातृत्वाभाववद् मायाद्यवच्छिन्नेश्वरजीवयोर्जगन्निर्मातृत्वकिञ्चित्कर्तृत्वानुपपत्त्याद्यनेकदोषग्रस्तत्वान्निरस्तः। अतो न जीवब्रह्मणोः स्वरूपैक्यस्य शास्त्रविषयत्वं सिद्ध्यति, किन्तु "अथातो ब्रह्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्तशास्त्रपर्यालोचने कृते सति

पूर्वोक्तस्य शक्तिविशिष्टस्यैकस्यैव। शक्तिवैशिष्ट्यं च परशिवब्रह्मणि "उमासहायम्", "पराऽस्य शक्तिः" इत्यादिश्रुतिभिः समुदीरितम्। तथा यजुर्वेदे—"एक एव रुद्रो न द्वितीयाय तस्थे। आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व।।" इति। अस्यायमर्थः प्रतिपादितः क्रियासारे—तथा च रुद्रः संसारदावानलपरितापपरिश्रान्तपशुपाशरूपरोगद्रावकः शिवः। एक एवेत्यत्र एवकारार्थः शङ्खः पाण्डर एवेतिवदन्ययोगव्यवच्छेदाच्छङ्खे वर्णान्तरनिषेधात् पीतादिज्ञानस्य काचकामिलादिदोषदूषितत्ववत् प्रकृतमन्त्रेऽपि रोगद्रावकत्वं शिवस्यैवेत्येतावन्मात्रेणापि शिवेतरस्य पाशच्छेतृत्वनिषेधस्य, शिवलिङ्गेतरस्य पाशभेदभ्रमस्य दोषदूषितबुद्ध्या जन्मान्तरोपार्जितदुष्कृतनिकरविघ्नस्यैव हेतुत्वस्य च संभवे पुनः श्रुतावेक इत्येकत्व-संख्यायाः पुनरसन्देहेन विधानाच्छिवलिङ्गेतरस्य ब्रह्मकोटित्वं नास्त्येवेति सिद्धम्। द्वितीय इति वक्तव्ये 'द्वितीयाय' इति निर्देशश्छान्दसः। तिष्ठतीति वक्तव्ये "तस्थे" इति भूतार्थनिर्देशो भूतभविष्यत्कालावच्छेदेनेतरावस्थाननिरासार्थः। आसमन्तात् खनति विदारयतीत्याखुः, आदिवराहरूपो विष्णुः, ते पशुः सकलजडाजडप्रपञ्चपाशविमोचकस्य पशुपतेस्तव सम्बन्धी पशुः पाशरूपेण जननमरणयोनिजत्वजायापहरणादिदुःख-जालेनावबद्धः पशुरित्यनेन आदिविष्णोर्जीवकोटित्वं शिवभजनरूपलिङ्गप्रतिष्ठापन-लिङ्गधारणविभूतिधारणरुद्राक्षधारणपञ्चाक्षरजपैरासादितभक्तिविशेषेण मुक्तत्वं च वर्णितं भवति। तस्माच्छिवशक्त्यपेक्षया भिन्नत्वं जीवकोटित्वं स्पष्टमेव। रुद्र तं जुषस्वेति, हे रुद्र तं तादृशपशुं तादृशगुणगणरत्नाकरस्त्वं पशुपुरोडाशरीत्या जुषस्व गृहाणेति जुषि प्रीतिसेवनयोरिति धातोरवगम्यते। एष ते रुद्र भागः, हे रुद्र! ते सकलाध्यात्मिकाधिदैविकादिसंसारदुःखभेत्तृत्ववतस्तव एष भागः=हविर्भागः, तं जुषस्वेत्यनेनैव सिद्धे पुनः "एष ते रुद्र भागः" इति हविर्भागस्य शिवलिङ्ग-सम्बन्धित्वप्रतिपादनादुक्तरूपेण क्रत्वधीश्वरत्वं शिवस्यैव, अन्येषां तद्गन्धोऽपि नास्तीत्यष्टमूर्त्यन्तर्गतयजमानमूर्तिरूपस्य यज्ञाद्यनुष्ठानादिः प्रतिपादितः। स च यज्ञादिर्वीरशैवानामन्तर्यागः शिवलिङ्गपूजादिकः, केवलवैदिकानामग्निष्टो-माद्यनुष्ठानमित्यवश्यमिष्ट्वा यथायोगं शिवप्रीतिः संपादनीया। तया चित्तशुद्धिद्वारा शिवज्ञानादेव मुक्तिरिति ह्युपवर्णितम्।

ननु धर्मधर्मिणोः शिवशक्त्योर्मध्ये धर्मिणः शिवस्यैव क्रत्वधीश्वरत्वादि परब्रह्मलक्षणं न शैवशक्तेरित्यत आह—"सह स्वस्राम्बिकया तं जुषस्व" इति। अम्बिकया सकलजगदण्डपिण्डप्रसवित्र्या, "अम्बा माताऽथ बाला स्यात्" इति

कोशात्। आविर्भूतशक्तेरपगतकोरकभावकुसुमादेव गन्धोपलब्धेर्वायुसम्पर्काद् विसृतावयवात् पुष्पगन्धवदंशा निस्सरन्ति। तद्वच्छैवशक्तेरेव सकलजगदण्डपिण्ड-प्रसवः प्रतिपादितो भवति। अत एव मातृवदाविर्भूतशक्तिः सकलपाशच्छेददक्षा, मातुः स्वोदरसंभवतनुजेषु वात्सल्येन पोषणस्य दर्शनादिति भावः। एतदुक्तं भवति—"पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम्" इति कूर्मपुराणोपबृंहित-श्वेताश्वतरोपनिषदि — "किं कारणं ब्रह्म कुतः स्म जाता" इति प्रश्नानुगुण्येन शक्तेरेव पाशविच्छेदनवर्णनाद् बालकानां मात्ररक्षणात् कार्श्यवत् केवलब्रह्मवादिनः क्षरन्तीति व्यज्यते।

ननु शक्तिरिति शिव इति द्वयोः प्रपञ्चमातापित्रोः प्रतिपादनात् "एकमेवाद्वितीयं ब्रह्म" इति श्रुत्यनुगृहीताद्वैतकोप इत्यत आह—स्वस्रेति। स्वसृत्वं सहजसिद्धत्वम्, पट्टमहिषीरूपम्। "एक एव रुद्रः" इति संसृतिरोगनिवर्तकस्यैकत्वप्रतिपादनपुरस्सरमेव-कारेणान्यद्वित्वसंख्याया अपक्रमप्रतिपादनात्। अत एव सुदर्शनाचार्यैरपि सहजसिद्धतया स्वसृत्वमित्युपवर्णितम्। तथा च 'सह स्वस्राम्बिकया तं जुषस्व" इति क्रत्वधीश्वरत्वस्य ब्रह्मलक्षणस्य शिवशक्त्युभयात्मकस्य जगत्कारणत्वप्रतिपादनाद् विशिष्टाद्वैतमेव प्रतिष्ठितं भवतीति।

विशिष्टाद्वैते च लिङ्गाङ्गसामरस्यं कथमिति चेदुच्यते। विशिष्टं च विशिष्टं च विशिष्टे लिङ्गाङ्गे तयोरद्वैतम्, सामरस्यमभेद इत्यर्थः। एकविशिष्टपदेन मयूराण्डरसगत-पादपक्षवर्णवैचित्र्यन्यायेन स्वान्तर्लीनसूक्ष्मचिदचित्प्रपञ्चाकारज्ञानक्रियासामरस्यात्मिकया सहजसिद्धया विमर्शेच्छाशक्त्यपरपर्यायचितिशक्त्या विशिष्टं चैतन्यं शिवरुद्रादिसंज्ञिकं लिङ्गमभिधीयते, "चैतन्यमात्मा" इति शिवसूत्रस्थितेः। अङ्कुरोन्मुखचणकादिवत् सृष्ट्युन्मुखेच्छाशक्तिरेव स्वांशे घृतकाठिन्यन्यायेन स्वगतपरस्परप्रतियोगिकानुयोगि-कज्ञानक्रियान्योन्याभावज्ञानलक्षणमायाप्रतिस्फुरणवती संती सुखदुःखमोहप्रदसत्त्व-रजस्तमःस्वभावप्रकृत्यपरपर्यायचित्तशक्तिर्भवति, "चितिरेव चेतनपदादवरूढा चैत्यसंकोचनी चित्तम्" इति शक्तिसूत्रस्थितेः। तद्विशिष्टं यत्काष्ठयोगहेतुकवह्निविस्फुलिङ्गाविर्भाववत् स्वशक्तिविक्षोभाविर्भूतशिवांशरूपं चैतन्यमङ्गं जीवपुरुषापरपर्यायं तदपरविशिष्टपदेनोच्यते, "चित्तमात्मा" इति शिवसूत्रस्थितेः। "अनाद्यविद्यासम्बन्धात्तदंशो जीवनामकः" इति रेणुकभगवत्पादोक्तेः, "शिवांशा ब्रह्मविष्णवाद्या अंशी देवः शिवः स्मृतः" इति क्रियासारोक्तेः, "ममैवांशो जीवलोके जीवभूतः सनातनः" इति भगवदुक्तेः, "अंशो नानाव्यपदेशात्" इति ब्रह्मसूत्रस्थितेः। अस्य स्वतन्त्रस्वप्रकाशशिवविभक्तत्वेन

मायाक्रान्तत्वात् तद्धेतुकाणवमायीयकार्ममलावृतत्वात् संसारित्वम्, "तद्वच्चिच्छक्तिसंकोचान्मलावृतः संसारी" इति शक्तिसूत्रस्थितेः, स्वशक्तिक्षोभमात्रेण स्थलं तद् द्विविधं मतम्। एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम्।। लिङ्गाङ्गोपाधिभेदेन द्विधा भिन्नं परस्परम्। महान् घटप्रभेदेन यथाकाशः प्रतीयते।। प्रतीयते तथा चैव स्थलं लिङ्गाङ्गभेदतः। स्थलं नाम परं तत्त्वं शिवरुद्रादिसंज्ञिकम्। उपास्योपासकत्वेन स्वयमेव द्विधा भवेत्।।" इत्यनुभवसूत्रोक्तेः।

तदेतदङ्गं शरीरे पृथिव्याद्यभिमानित्वे भक्ताद्यपरपर्यायब्रह्मादिभेदेन षड्विधं भवति। लिङ्गमपि भक्ताद्यनुग्रहार्थं पृथिव्याद्यधिष्ठानत्वेनाधारादिस्थानेषु सद्योजाताद्यपरपर्यायाचारादिलिङ्गभेदेन षड्विधं भवति। तयोरद्वैतमित्यर्थः। इत्थं च "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।", "द्वे ब्रह्मणी वेदितव्ये परं चापरं च" इत्यादिभेदविधायकश्रुतीनाम्, "एकमेवाद्वितीयं ब्रह्म", "नेह नानास्ति किञ्चन", "एक एव रुद्रो न द्वितीयाय तस्थे", "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्याद्यभेदविधायकश्रुतीनां च परस्परं विरोधः, अनयोर्लिङ्गाङ्गयोरग्निकणयोरिव भेदाभेदाभ्युपगमात्। जीवेश्वरयोर्यदि भेदवादिनामिव भेद एवेष्टस्तदा तूलादिषु लग्नस्य विस्फुलिङ्गस्य दाहकत्वं न स्यात्, अग्निभिन्नजलादिवद्विस्फुलिङ्गस्याप्यंशस्याग्निभिन्नत्वात्। तूलादिष्वग्निकणे लग्ने चार्द्री भवेत्। किं च "यदग्ने रोहितं रूपम्" इति छान्दोग्यश्रुतिसिद्धरूपमन्तरा रूपान्तरं प्रतीयात्। तथा न प्रतीयतेऽनुभवविरोधात्। भेदानुपपत्त्या अग्निकणयोर्दाहकत्वेन रोहितत्वेन चाभेदोऽङ्गीकरणीयः। अभेदे च विवक्षिते वह्नेः पाकसाधनत्वशीतनिवर्तकत्वादिधर्मवत् सर्वेऽग्निधर्माः कणेऽपि संभवेयुः। तदुक्तं क्रियासारे — "अग्निस्फुलिङ्गयोर्नास्ति यथा भेदः स्वरूपतः। अग्नित्वेन कणत्वेन भेदोऽपि स्फुरति क्वचित्।।" इति। तथा अंशिनो लिङ्गस्य अंशस्याङ्गस्य च भेदाभेदौ युज्येते, लिङ्गस्य निरंशत्वेऽपि स्वस्वातन्त्र्यपरिकल्पितांशभेदः संभवत्येव। स्वलीलार्थं सार्वभौमप्रभावामोदपरिबृंहितो नृपः पदातिधर्मं करोति, तद्वद् अखण्डानन्दरसास्वादनतृप्तोऽपि खण्डरसास्वादनार्थमिच्छायां स्वातन्त्र्यकल्पिताणवादिमलावृतः सन् घृतकाठिन्यन्यायेनांशतः शरीरी भवति।

तस्माच्छिवांशीभूतस्याज्ञानात्मकाणवादिमलावृतत्वान्नृप इवाहं शिव इति ज्ञानं नास्ति, "एकाकी न रमते स द्वितीयमैच्छत्" इति श्रुतेः। स्वयमेव भगवान् शिवः स्वस्वातन्त्र्यशक्त्या लिङ्गाङ्गरूपोपास्योपासकभावापन्नः सन् क्रीडति। मुक्ति-

दशायामङ्गविशेषणीभूतचित्तशक्तिगताणवमलरूपाज्ञानतमोभागात्मिकाया अविद्याया विलयात् तामसनिरसनस्थलापन्नस्यात्मनश्चित्तस्य चितिरूपत्वात् तत्परिज्ञाने चित्तमेवान्तर्मुखीभावेन "चेतनपदाध्यारोहाच्चितिः" इति शक्तिसूत्रस्थितेः। लिङ्गाङ्गसामरस्यदृढज्ञानापहृतमलत्रयस्य शुद्धशिवांशरूपस्यात्मनो नदीनां समुद्रे सामरस्यमिव महालिङ्गैक्यात् स्वात्मशिवस्वरूपतोऽभेदः। "आत्मायं केवलः शुद्धः शिवस्यांशः सदाऽमलः। नित्यो निरञ्जनः" इति। बन्धदशायां तु शुद्धांशस्य चितिसङ्कोचात्मकमलावृतत्वाद् लिङ्गाङ्गसामरस्याभावात् शिवत्वाभावाद् भेदः। यथा अग्नित्वेन अग्निकणयोरभेदेऽपि कणत्वेनाग्नित्वेन अग्निकणयोर्भेदः। तस्मान्न कस्याऽपि श्रुतिवाक्यस्य विरोधो द्वैताद्वैतात्मकविशिष्टाद्वैतपक्षे। तदुक्तं कूर्मपुराणे—"केचिद् द्वैतं प्रशंसन्ति केचिदद्वैतवादिनः। द्वयोः श्रुत्यैकदेशत्वात् सर्वश्रुतिसमन्वयः।। भेदाभेदमते श्रौतैः परिग्राह्ये मुमुक्षुभिः" इति। तस्माद् द्वैताद्वैतात्मकशक्तिविशिष्टाद्वैतमतमेव श्रौतमुमुक्षुग्राह्यम्, न त्वद्वैतमतं न च द्वैतमतम्। उक्तं च सिद्धान्तागमेऽपि "द्वैताद्वैतमतं वीरशैवं मोक्षैककल्पकम्। सर्ववेदान्तसिद्धान्तसारं सर्वार्थसिद्धिदम्।।" इति। तस्मादहिकुण्डलं स्वर्णकुण्डलमित्यत्र यथा भेदाभेदौ प्रतीयेते, तथा लिङ्गाङ्गयोर्भेदाभेदाविति मनसि निधाय भगवता बादरायणेन "सदेव सौम्येदमग्र आसीत्", "तदैक्षत बहु स्यां प्रजायेय" इति श्रुतिमनुसृत्य ईक्षणलक्षणज्ञानबहुभवनक्रियाशक्तिविशिष्टं स्वतन्त्रं लिङ्गरूपं ब्रह्म प्रथमसूत्रे जिज्ञास्यत्वेनोपदिश्यते—

## अथातो ब्रह्मजिज्ञासा ।।१।।

अत्राथशब्द आनन्तर्यार्थो वर्तते, अतःशब्दो हेत्वर्थे, ब्रह्मशब्दश्च लिङ्गे। ब्रह्मणो जिज्ञासेति कर्मणि षष्ठी। जिज्ञासापदं विचारलाक्षणिकम्। कर्तव्य इति शिष्यते। तथा च स्वस्वरूपाभेदेन ब्रह्मविचारः कर्तव्य इत्यर्थः। किमनन्तरमस्यारम्भः? इति चेत्, धर्मविचारस्य वृत्तत्वात्तदनन्तरं ब्रह्मविचारः कर्तव्य इत्युच्यते। वेदाध्ययनानन्तरं कृत्स्नवेदार्थविचारस्य प्राप्तत्वाद् ब्रह्मणोऽपि वेदार्थत्वात् तस्य जैमिनिना कुत्राप्यविचारितत्वात् परमसूक्ष्मत्वाच्च विचारार्हमेव ब्रह्मेति प्राधान्येन तद्विचारः प्रतिज्ञातो भगवता बादरायणेन। धर्मब्रह्मविचारयोरङ्गाङ्गित्वेन अथशब्दस्य मङ्गलार्थे वक्तव्ये पूर्वकाण्डविरोधात् कर्तव्यत्वेन प्रतिज्ञातब्रह्मविचारेऽन्वयासंभवान्न मङ्गलार्थो युज्यते। अथशब्दस्यानन्तर्यार्थकत्वेऽप्यन्यार्थनीयमानोदकुम्भादिदर्शनवत् तदुच्चारणश्रवणमात्रान्मङ्गलप्रयोजनस्याऽपि सतां शिष्टाचारपरिपालनमपि भवत्येव। न

चास्याथशब्दस्याधिकारार्थः संभवति, "अथ योगानुशासनम्", "अथ शब्दानुशासनम्" इत्यादौ अनुशासनरूपशब्दसन्दर्भरचनायाः कर्तव्यत्वेन अधिकारयोग्यत्वेनाथशब्दस्याधिकारार्थकत्वेऽपि ब्रह्मविचारस्यान्तःकरणवृत्तिरूपस्य कर्तव्यत्वेनाधिकारयोग्यत्वाभावात्। अधिकारो नामारम्भः। योगानुशासनमित्यादौ शब्दरचनात्पूर्वमकृता अथ शब्दविन्यासपूर्वकं कृतेतिवद् व्यासेन पूर्वं ब्रह्मजिज्ञासितमथशब्दविन्यासपूर्वकं जिज्ञासितमिति वक्तव्ये शास्त्रनिर्मातुर्व्यासस्य सूत्ररचनायाः पूर्वमब्रह्मज्ञानित्वापत्तेश्च। न चास्याथशब्दस्य मङ्गलाधिकारानन्तर्यार्थत्रयं च युज्यते, "सकृदुच्चरितः शब्दः सकृदर्थमवगमयतीति न्यायविरोधात्। एतेन अथशब्दो मङ्गलार्थः, अधिकारार्थः, आनन्तर्यार्थश्चेत्यत्र — "आनन्तर्येऽधिकारार्थे मङ्गलार्थे तथैव च" इत्यादिगारुडपुराणोपन्यासो नवीनशाम्बरीविलसित इति सिद्धम्। न च पक्षान्तराङ्गीकारार्थोऽयमथशब्दः, "अथ दध्ना जुहोति, अथ पयसा" इत्यादिवत् पूर्वमेकस्याप्रतिपादनात्तत्प्रसङ्गाभावात्। तस्माद् यस्य पूर्वकालवर्तिनो नैयत्येन प्रयोजकत्वं तदानन्तर्यं वक्तव्यम्। तच्च साधनचतुष्टयम्। तदानन्तर्यं वक्तव्यमिति केवलाद्वैतिनां मतम्। तन्न युक्तम्, चतुःसाधनसम्पत्तीनां वेदान्तविचारानन्तरभावित्वाद् वेदान्तविचारात् पूर्वमेव तन्निश्चये तस्यानर्थक्यात्। तथाहि — नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमादिषट्सम्पत्तिः, मुमुक्षुत्वमित्येवं साधनचतुष्टयम्। अत्र विषयदोषानुसन्धानकृतविरागस्योत्कृष्टब्रह्मज्ञानाधीनत्वात्, ज्ञाते च ब्रह्मणि तज्जिज्ञासासंभवान्नित्यानित्यवस्तुविवेकस्य वेदान्तशास्त्रज्ञानाधीनत्वात्, नित्यानित्यवस्तुविभजनपूर्वकविवेकस्य जीवन्मुक्तधर्मत्वेनापरोक्षज्ञानिनो बन्धशब्दितबुद्धिधर्मत्वासंभवान्मुमुक्षुत्वस्याप्यसंभवादन्यदेव पूर्ववर्ति इति वक्तव्यम्। न च भोजनगमनादिकं पूर्ववर्तीति वक्तुं शक्यते, तस्य नैयत्याभावात्।

ननु ज्ञानं द्विविधं परोक्षमपरोक्षं च। आद्यं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिनिचयश्रवणजनितं ब्रह्म नित्यमित्याकारकम्। अनेन ब्रह्म नास्तीत्यसदावरणस्याज्ञानकार्यस्य नाशेऽप्यभानावरणस्याज्ञानकार्यस्य नाशाभावात्, शाब्दबोधरूपब्रह्मविशेष्यकनित्यत्वप्रकारकापरोक्षज्ञानादेव तद्भिन्नस्य जगतोऽनित्यत्वज्ञानं तत एवानित्ययोरैहिकामुष्मिकयोर्विरागस्तथैव शमादयोऽपि संभवन्त्येव। तथा चाभानावृतेरपरोक्षज्ञानजन्यध्वंसप्रतियोगित्वाद् ब्रह्मापरोक्षज्ञानाय साधनचतुष्टयसम्पत्तिर्ब्रह्मजिज्ञासापूर्वभाविनीति चेन्न, तस्यास्तदव्यवहितपूर्वभावित्वाभावात्। केषाञ्चित्साधनानामग्निष्टोमादिस्थूलोपासनासु केषाञ्चिद्दहरविद्यादिसूक्ष्मोपासनासु च कारणत्वाद् घटं

प्रत्याकाशादेरिवान्यथासिद्धेः। तथाहि "द्रव्यशौचं मनःशौचम्" इत्यादिस्मृत्या शमादीनां श्रद्धान्तानामग्निष्टोमाद्यङ्गताया ज्ञायमानत्वात् सगुणमूर्तिविषयकमनोवृत्तिरिव निर्गुणविषयकमनोवृत्तिनैरन्तर्यरूपनिधिध्यासनायोगान्निर्गुणब्रह्मजिज्ञासायां निदिध्यासनोपयोगाभावात्, अपहतपाप्मत्वादिविशिष्टदहराकाशमध्यवर्तिनि नित्यत्वज्ञानादेव तदतिरिक्तस्य सर्वस्यानित्यत्वज्ञानात्, नित्यानित्यवस्तुविवेकस्य सूक्ष्मदहरोपासनाङ्गत्वात्, तद्विवेकसमुदितविरागस्यापि तदङ्गत्वात्, साधनानां स्थूलसूक्ष्मोभयोपासनाया अव्यवहितपूर्वभावित्वात्, तदव्यवहितब्रह्मजिज्ञासायाः साधनचतुष्टसम्पत्त्यनन्तरभावित्वासिद्धेः। तत्सम्पत्तेर्ब्रह्मविचाराव्यवहितपूर्वक्षणावच्छेदेनावर्तमानत्वात्तवापि ब्रह्मविचारस्य स्थूलसूक्ष्मोभयोपासनारूपधर्मानन्तरभावित्वस्यैव वक्तुमौचित्यम्। वदति चामुमेवार्थं श्रुतिरपि — "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति। तस्माद् धर्मसम्पत्तेरेव ब्रह्मजिज्ञासापूर्वभावित्वं युक्तम्। न च ब्रह्मणः धर्मस्येव वेदार्थत्वेऽपि धर्मविचारस्य वेदाध्ययनानन्तरभावित्वमिव ब्रह्मविचारस्यापि तदनन्तरभावित्वं युज्यते, धर्मविचारस्यैव कारणताग्राहकसामग्रीसत्त्वात्, ब्रह्मविचाराव्यवहितपूर्वभावित्वं धर्मविचारस्यैव वक्तुमौचित्यात्। यद्यपि ज्योतिष्टोमादिस्थूलोपासनानां दहरविद्यादिसूक्ष्मोपासनानां वा आराधनारूपत्वात् तदाकाङ्क्षिताराध्यलिङ्ग-शिव-हर-मृड-रुद्र-पशुपति-महेश्वरादिशब्दित- ब्रह्मप्रतिपादक-वेदान्तशास्त्रपूर्वमीमांसाशास्त्रैक्येन "अथातो धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्तमेकमेव शास्त्रम्, तत्र "अथातः शेषलक्षणम्" इत्यादिवदवान्तरपरिच्छेदार्थोऽयम् "अथातो ब्रह्मजिज्ञासा" इत्यारम्भः, तथापि कर्तृभेदात्फलभेदात् "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति पृथग् ब्रह्मोपदेशविधानाच्चैकशास्त्रानुपपत्तेः। तथापि न हीयते ब्रह्ममीमांसाया धर्ममीमांसानन्तरभावित्वम्, धर्मज्ञानस्य ब्रह्मज्ञानसाधनत्वात्। धर्मविचारोप-युक्तानां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां वेदचोदनार्थवादश्रुत्यादिप्रमाणप्रतिपादनादीनां च ब्रह्मविचारोपयुक्तत्वात्।

कथमन्यथा पूर्वोत्तरमीमांसात्वप्रसिद्धिः सङ्गच्छते, धर्मविचाराभावे धर्मज्ञानाभावाद् धर्मज्ञानाभावे तदनुष्ठानाभावात्, अनुष्ठेयधर्माभावे तत्साध्यब्रह्मबोधाभावान्मोक्षाभावप्रसङ्गात्। न च धर्मस्य ब्रह्मबोधसाधनत्वे प्रमाणाभाव इति वाच्यम्, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन" इति श्रुतेरेव प्रमाणत्वात्। यदि धर्मब्रह्मविचारयोः क्रमनियमो न स्यात्तदा "शास्त्रयोनित्वात्", "हृद्यपेक्षया मनुष्याधिकारत्वात्" इत्याद्यनेकसूत्रेषु पूर्वतन्त्रसिद्धानां वेदप्रामाण्याधिकारादीनां

प्रतिपादनं न स्यात्, "विद्यां चाविद्यां च यस्तद्वेदोभयं सह", "ब्रह्मवित्पुण्यकृत्", "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम्" इत्यादि-ज्ञानकर्मसमुच्चयप्रतिपादिनीनां श्रुतीनामुपलभ्यमानत्वात्। धर्मज्ञानयोर्मुक्तिफलकत्वाद्धर्मविचारानन्तरभावित्वं ब्रह्मविचारस्य युज्यते। न च "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" इत्यत्र कर्मणो मुक्तिफलकत्वाभावस्य श्रुतत्वात् कथं ज्ञानफलमेव धर्मफलं भवति, "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यत्र कर्मफलस्य नश्वरत्वावगमात्, "तमेव विदित्वातिमृत्युमेति" इत्यत्र ज्ञानफलस्य नित्यत्वावगमादिति वाच्यम्; उदाहृतश्रुतीनां ज्ञानासमुच्चितकर्मनिन्दायां तात्पर्यात्, ज्ञानसमुच्चितफलाभिसन्धिरहितकर्मफलस्य मोक्षस्य नित्यत्वाच्च ज्ञानकर्मसमुच्चयवादे न कस्याश्चिच्छ्रुतेर्विरोधः।

कथमन्यथा — "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यत्रोक्तं समित्पाणित्वं कर्मनिर्विण्णस्य संभवति गुरूपसदना वसती। तस्मात् समित्पाणित्वं गुरुकृतलिङ्गधारणकर्मोपयोगार्थमिति तद्विशेषणमेव ज्ञानकर्मसमुच्चयमाचष्टे। "यमेवैष वृणुते" इति श्रुतिरपि लिङ्गधारणं विधत्ते, "तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति लिङ्गधारणकर्मफलमनश्वरं स्वकीयतनुशब्दित-पराहन्तामयचिच्छक्त्यात्मकसायुज्यापरपर्यायसामरस्यमभिधीयते। "ब्रह्मविदाप्नोति परम्", "सत्यं ज्ञानमनन्तम्", "ज्ञात्वा शिवं शान्तिमत्यन्तमेति", "ईशं ज्ञात्वा अमृता भवन्ति", "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्", "आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः", "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिश्रुतिभिर्ज्ञानफलमेव यत्तदेव सूक्ष्मोपासनारूप-धर्मफलमिति स्पष्टं ज्ञायमानत्वाच्च तदुभयविचारयोः क्रमनियमो युज्यते। सकलचिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टा-द्वितीयवैभवस्य सकलनिगमागमसाररहस्य-निदानस्य भव-शिव-शर्व-पशुपति-परमेश्वर-महादेव-शम्भु-लिङ्गप्रभृतिपर्यायवाचक-शब्दसारप्रकाशितपरममहिमविलासस्य स्वशेषीभूतनिखिलचेतनसमुपासनानुगुण-समुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परस्य ब्रह्मणः प्रतिपादकमुपनिषच्छास्त्रं विचारणीयम्। तथा च तन्नियोगरूपचोदनालक्षणस्य तदाराधनाविशेषस्यार्थरूपस्य तत्तदर्थवादप्रकाशितप्राशस्त्यविलासस्य श्रुत्यादिसंपादितसकलाङ्गपुङ्खितस्य वेदप्रमाणानु-गुणस्मृतीतिहासपुराणाभियुक्तसूक्तिकामिकादिवातुलान्तदिव्यागमवचनकृतोपबृंहणस्य विधिनिषेधादिमतो निखिलपुरुषार्थरत्नाकरस्य परमप्रबोधसाधनस्य भगवतोधर्मस्य विचारानन्तर्ये प्रथमाधिकरणस्थाऽथशब्दवृत्तिरिति निर्णीयते।

ननु लिङ्गधारणपञ्चाचाराष्टावरणानां पूर्वकाण्डप्रतिपाद्यत्वाभावात्, अग्निष्टोमादीनां तत्प्रतिपाद्यत्वात् कथं समनन्तरकाण्डोक्तब्रह्मविचारस्य वीरशैवीयधर्मानन्तरभावित्वमिति चेदुच्यते, धर्मो द्विधा — पशुधर्मः, पतिधर्मश्चेति। अग्निष्टोमाद्यश्वमेधान्तानां यज्ञानां पाशाश्रयत्वात्तेषां पशुधर्मता। लिङ्गधारणलिङ्गार्चनलिङ्गार्पितप्रसादग्रहणलिङ्गानुसन्धान-गुरुजङ्गमपूजनतत्पादोदकप्रसादसेवनलिङ्गाङ्गसामरस्यबोधकपञ्चाक्षरमन्त्रजपभस्मरुद्राक्षधारणपञ्चाचारादिवीरशैवीयधर्माणां पाशमोचकत्वात्तेषां पतिधर्मता। न वयं पशुधर्माणां ज्ञानसमुच्चयं ब्रूमः, किन्तु विशिष्टपतिधर्माणामेव।

ननु लिङ्गधारणलिङ्गार्चनादीनां केषाञ्चिद् वीरशैवीयधर्माणां "पवित्रं ते विततं ब्रह्मणस्पते", "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्", "अमृतस्य देवधारणो भूयासम्", "तव श्रिते मरुतोऽर्चयन्तः", "त्र्यम्बकं यजामहे", "तेन त्यक्तेन भुञ्जीथाः", "अत्रिगुप्सातमश्नीयाद् यदि पाप्मानमश्नितम्", "यच्छंच योश्च मनुरायजे पिता तदश्याम तव रुद्रप्रणीतौ", "तस्मिन् यदन्तस्तदुपासितव्यम्", "आचार्यदेवो भव", "अतिथिदेवो भव", "चरणं पवित्रम्", "त्रिपादूर्ध्वमुदैत् पुरुषः पादोऽस्येहाभवत्पुनः", "नकारादिमकारान्तं ज्ञात्वा पञ्चाक्षरीं जपेत्", "नमः शिवाय च शिवतराय च", "भूत्यै न प्रमदितव्यम्", "त्रिपुरवधार्थमहं निमीलिताक्षोऽभवम्। तेभ्यो जलबिन्दव भूमौ पतिताः। ते रुद्राक्षा जाताः" इत्यादिश्रुतिप्रमाणकत्वेऽप्याचारादिलिङ्गविभजन-भक्ताद्यङ्गविभजन-शक्तिभेद-भक्तिभेद-हस्तभेदार्पितभेदादीनां च परिदृश्यमानपूर्व-काण्डीयश्रुतिमूलकत्वाभावात् कथं तदानन्तर्यं ब्रह्मविचारस्येति चेन्न, पूर्वकाण्डनिषेध-शास्त्राविषयकत्वात्तेषां पूर्वकाण्डप्रसिद्धत्वात्, एकादश्यादिव्रतवत्।

ननु निष्कामसमनुष्ठानात् पतिधर्मरूपाणामग्निष्टोमादीनामानन्तर्यमस्तु इति चेन्न, पूर्वाश्रयनिरसनस्थलविरोधात्, "शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते" इति भगवत्पादोक्तेः, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायाच्च। अत एवोक्तं क्रियासारे प्रथमोपदेशे — "अग्निष्टोमादयो यज्ञा अश्वमेधावसानकाः। सर्वे ते शिवभक्त्यर्थं निश्चिता वेदशास्त्रयोः।।" इति। किञ्च तत्रैव — "यथा पिपीलिका वृक्षमूलमाघ्राय तत्फलम्। आरुह्य लभते तद्वत्" इत्यादिना निष्कामेन स्वपापस्य विच्छित्त्यै पशुधर्मानुष्ठानपरस्य पिपीलिकासादृश्यम्, पतिधर्मानुष्ठानपरस्य च विहङ्गमसादृश्यमुक्तम्। एतेन पशुधर्माणां निष्कामसमनुष्ठितानामपि पतिधर्मसमर्पकत्वेन परम्परया मुक्तिसाधनत्वम्, पतिधर्माणां तु ज्ञानेन सह साक्षात्कारणत्वं मुक्ताविति पर्यवसितम्।

ननु तथापि पूर्वकाण्डोक्ताग्निष्टोमाद्यनुष्ठानाभावादवैदिकत्वात् कथं ब्रह्मविद्याधिकारिविशेषणत्वं वीरशैवीयधर्माणामिति चेन्न, किं नाम वैदिकत्वम्? पूर्वकाण्डोक्तयावद्धर्मानुष्ठातृत्वं वा, तदुक्तयत्किञ्चिद्धर्मानुष्ठातृत्वं वा? आद्येऽव्याप्तिः। कथं? कृतोपनयनस्याशु सनकादेर्वेदान्तज्ञानदर्शनेऽप्यवैदिकत्वं यावत्कर्मानुष्ठानराहित्यकृतं स्यात्, स्याच्च नैष्ठिकब्रह्मचारिण्यसंभवश्च, यावन्नित्यनैमित्तिकानुष्ठानस्य ब्रह्मादिभिरप्यशक्यत्वात्। द्वितीये तु वीरशैवेऽपि यत्किञ्चिद्धर्मानुष्ठातृत्वसत्त्वाद् वैदिकत्वात्तद्विशेषणत्वं वीरशैवीयधर्माणां युज्यते।

श्रीकरभाष्यकारस्तु — "शैवदीक्षितानां प्रयोजनाभावेऽपि "नहि कर्मणि कर्मान्तरारम्भः" इति न्यायेन विरुद्धस्वभावयोः प्राकृताप्राकृतयोः संस्कारयोरेकत्र सामानाधिकरण्याभावाद् ईश्वराज्ञाभङ्गभयाद् वेदविहितयावत्कर्मानुष्ठानं कर्तव्यमेव" इति वीरशैवस्यैव यावत्कर्मानुष्ठानं वदतीति यावत्। तत्तुच्छम्, पूर्वाश्रयनिरसनस्थलविरोधात्। किञ्च, तत् सप्तसागरशोषणप्रवृत्तमहापण्डितकौशल्यमनुकरोत्येव। कर्मणां संकल्पाधीनत्वेन संकल्पविरोधे प्रायश्चित्तविधानात् संकल्पिताश्रमेणाश्रमधर्मोऽनुष्ठेयः। यथा ब्रह्मचारी गृहस्थाश्रमस्वीकाराभावे तद्धर्मानपि नार्हति, गृहस्थो वानप्रस्थधर्मान्, वनस्थो यतिधर्मान् नार्हति, तद्वदतिवर्ण्यत्याश्रमिशब्दितशिववर्णाश्रमी वीरशैवो पूर्वप्राकृताश्रमधर्मान् नार्हति। शिववर्णी शिवाश्रमधर्मान् विभूतिधारणरुद्राक्षधारणादीनर्हत्येव। शिवाश्रमचातुर्वर्ण्यं चोक्तं सिद्धान्तशिखामणौ — "वर्णाश्रमव्यवस्था हि" इत्यादिना। शिवधर्मे च "यः शिवब्रह्मचारी स्यात्" इत्यादिना। तस्मान्न पशुधर्माधिकारापादकोपनयनानुवर्तनापेक्षा वीरशैवस्य, किन्तु पतिधर्माधिकारापादकाप्राकृतोपनयनापरपर्यायदीक्षानुवर्तनापेक्षैव।

"अष्टमे वर्षे ब्राह्मणमुपनयीत, तमध्यापयीत" इति,
गर्भाष्टमे कृता दीक्षा मुख्या सा षोडशावधि।
गौणी तदूर्ध्वमधमा वीरशैवान्वयायिनाम्॥

इति श्रुत्यागमवाक्याभ्यां प्राकृताप्राकृतोपनयनयोः समानकालिकत्वात्, श्रुत्यागमयोरेकार्थकत्वात्, "वेदसिद्धान्तयोरैक्यमेकार्थप्रतिपादनात्" इत्युक्तत्वात्, प्राकृतोपनयनसंस्कृतस्य वेदाध्ययनाधिकारवदप्राकृतलिङ्गधारणदीक्षासंस्कृतस्यापि वेदाध्ययनाधिकारात्, "उप शिवसमीपे नीयतेऽनया ज्ञानकर्मोभयात्मिकया दीक्षया" इति व्युत्पत्त्या शिवदीक्षाया अप्युपनयनार्थकत्वस्य सुवचत्वात्, विहितकाले प्राकृतोपनयनसंस्कृतस्याप्यगस्त्यादिवत् षट्स्थलब्रह्मविद्याधिकारार्थं विरागकालेऽप्राकृत-

शिवलिङ्गधारणात्मकपाशुपतदीक्षारूपमुपनयनमावश्यकम् , अन्यथा ब्रह्मविद्याधिकारस्यैवासिद्धेः। मुण्डकाद्युपनिषत्सु यावज्जीवलिङ्गधारणात्मकमहाव्रतस्यैव शिरोव्रतपाशुपतव्रतात्याश्रमव्रतशाम्भवव्रतत्वेन निरूपणात्, तस्य ब्रह्मविद्याधिकारिविशेषणत्वेन च निरूपितत्वात्। अत एव ब्रह्मविद्योपदेशलाभाय गुरूपसर्पणावसरे — "स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यत्र समित्पाणित्वं गुरुकृतलिङ्गधारणात्मक-शिवदीक्षाङ्गहोमकर्मोपयोगार्थमुच्यते। तथा च लिङ्गधारणादिपतिधर्मानन्तरभावित्वं ब्रह्मविचारस्येत्युक्तार्थः समीचीनः। तदुक्तं क्रियासारे— "पतिधर्मा इमे ज्ञेयास्तदानन्तर्यमुच्यते" इति।

अत एव मुण्डकोपनिषदि — "तान्याचरथ नियतं सत्यकामा एष वः पन्था सुकृतस्य लोके" इति मुमुक्षूणां ब्रह्मविद्याङ्गतया पतिधर्मान् विधाय, अग्रे — "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतत् श्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं पुनरेवापियन्ति।।" इति पशुधर्माणामवरत्वं पतिधर्माणां वरत्वम्; पशुधर्मनिष्ठानां पुनः पुनर्जरामरणादिमत्त्वं पतिधर्मनिष्ठानां तद्राहित्यं चोक्तम्। अवरत्वं च पशुधर्माणां पशुविशसन-मांसभक्षण-सुरापानादिदोषदुष्टत्वरूपं बोध्यम्। पतिधर्माणां वरिष्ठत्वं च तत्रैवोक्तम्— "इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः" इति। एतावता पशुधर्माणां मुण्डकादिषु बहुधा निन्दितत्वात्, निन्दितकर्मानुष्ठातृणामपि निन्दितत्वादविगीतशिष्टत्वाभावात्तेषां तदाचरणविषयत्वाभावेन लिङ्गधारणेऽवैदिकत्वं साधयितुमशक्यत्वात्, ब्रह्मविष्णुप्रमुखदेवगौतमादिमुनीनां परमशिष्टानामाचारविषयत्वाद् लिङ्गधारणमवैदिकमिति वादिनो भ्रान्ताः। तदुक्तं लिङ्गपुराणे उत्तरभागे एकविंशतितमेऽध्याये—

ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः ।
धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः ।। इति।

अत एवोक्तं भगवता बादरायणेन — "शिष्टास्ते लिङ्गधारिणः" इति। तत्रभवता हरदत्ताचार्येणापि — "अन्यानशिष्टानिति निश्चिनोमि" इति।

ननु समग्रवेदाभ्युपगन्तृत्वं शिष्टत्वम्, तद् यदि लिङ्गधारिषु वीरशैवेषु वर्तते तदुक्तमग्निष्टोमादिधर्मानुवर्तनमपि स्यादिति न भ्रमितव्यम्, ब्रह्मचारिणामग्निहोत्रादिकर्मप्रतिपादकवेदाभ्युपगन्तृत्वेऽप्यग्निहोत्रादिकर्मानुवर्तनाभावात्, राजसूयादिक्षत्रियधर्मप्रतिपादकवेदाभ्युपगन्तृत्वेऽप्यन्येषां तदनुष्ठानाभावात् सर्वेषामप्यशिष्टत्वप्रसङ्गात्, स्वाश्रमोचितधर्मानुष्ठातृणां वीरशैवानामाचारविषयत्वाल्लिङ्गधारणं वैदिकमिति सिद्धम्।

लिङ्गपुराणे उत्तरभागे एकविंशतितमेऽध्याये —

वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च ।
ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम् ।। इति।

वेदेषु ऋगादिषु, शास्त्रेषु स्मृतिषु इत्यर्थः।

नन्वित्थं चेत् कथं त्यक्तं कैश्चिल्लिङ्गधारणमिति चेदुक्तं पूर्वाचार्यैरेव —

वेदशास्त्राण्यनालोच्य केचित् पण्डितमानिनः।
धारणं शिवलिङ्गस्य नाङ्गीचक्रुरमर्षतः ।। इति,
"धनी ह्युदररोगस्थो न भुङ्क्ते ह्यन्नमुत्तमम्" इति च।

धनिकस्य उत्तमान्नभोजनाभावो यथा प्रबलौदर्यरोगनिमित्तकस्तथा केषाञ्चिद्वैदिकलिङ्गधारणस्वीकाराभावस्तत्कृतपूर्वार्जितदुरदृष्टरोगनिमित्तक इति मन्तव्यम्। तस्मात् — "अतप्ततनुर्न तदामोऽश्नुते" इति श्रुतेर्लिङ्गधारणात्मकदीक्षाग्निनाऽतप्ततनोर्मोक्षाभावार्थकत्वेन व्यतिरेकमुखेन लिङ्गधारणस्य मुक्त्यसाधारणकारणतायाः, "अमृतस्य देवधारणो भूयासम्" इति श्रुतेरन्वयमुखेन तत्कारणतायाश्चावगमाद् मुण्डकाद्युपनिषत्प्रसिद्धशिरोव्रतात्याश्रमव्रताद्यपरपर्यायसाङ्गलिङ्गधारणमहाव्रतात्मकधर्मानन्तर्यमित्यथशब्दस्य पर्यवसितार्थः।

"अष्टमे वर्षे ब्राह्मणमुपनयीत", "तमध्यापयीत", "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनानन्तरं सर्वोऽपि वेदार्थो विचारणीयः। तत्र कर्मकाण्डस्य प्राथम्यात्तदर्थविचारः प्रथमं जैमिनिना कृतः। तद्विचारादेव दहरविद्यादिसूक्ष्मधर्मोऽपि विचारितप्राय एव। तद्विषयीभूतं तु ब्रह्माविचारितम्, अर्थात् पूर्वमीमांसायां ब्रह्म यतो न विचारितमतस्तस्मादित्यर्थः। न च कृत्स्नस्य वेदार्थस्य विचारितत्वाद् ब्रह्मणोऽपि वेदार्थत्वात् तद्विचारो व्यर्थ इति वाच्यम्, पूर्वतन्त्रे कुत्रापि ब्रह्मणो विचारितत्वाभावात् पूर्वतन्त्रे न कृत्स्नस्य वेदार्थस्य विचारितत्वसिद्धिः। तस्माद्बादरायणेन ब्रह्मविचारः प्राधान्येन प्रतिज्ञातः। तद्विचारोऽपि श्रुतिवाक्यत एव कर्तव्यः, "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतेः, "भाषाप्रबन्धैर्यज्ज्ञानं यच्च पौरुषवाक्यतः। न तस्य चात्र ज्ञानस्य पुरुषार्थैकहेतुता।।" इति क्रियासारोक्तेश्च।

ननु "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधेरर्थावबोधफलस्यावबोधकसापेक्षत्वात्, अर्थावबोधस्य च विचारसापेक्षत्वात्, वेदार्थस्य ब्रह्मणोऽप्यध्ययनविधित्वेनाक्षिप्तस्य

विचारस्य विषयत्वे "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिना पृथग् ब्रह्मोपदेशविधिरनर्थः स्यादिति चेन्न, प्राकृतोपनयनसंस्कृतस्य वेदाध्ययनानन्तरं पूर्वमीमांसापाठमात्रेण कर्मविद्याया अनुष्ठानासंभवात्, तावता सन्दिग्ध-वाक्यार्थनिर्णयेऽपि नानाशाखागताङ्गोपसंहारेण प्रयोगस्य परिज्ञानाभावात्। किन्तु कल्पसूत्राध्ययनेन तत्तत्कर्माभिज्ञोपदिष्टप्रयोगवचनेन च यथासंभवं प्रयोगान् ज्ञात्वा कर्मानुष्ठानं संभवति। एवमिहापि "आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापत्" इत्येवमादिशास्त्रात् तत्तद्विद्याभिज्ञादाचार्यात् पतिधर्मानुष्ठानाधिकारसंपादकाप्राकृतोपनयनप्राप्त्यर्थं समित्पाणिः सन्नुपसर्प्य तदुपनीतः सन् तत ईदृशं ब्रह्मोपास्यमेतावद्गुणविशिष्टम्, एतानि चोपासनस्य पूर्वोत्तराण्यङ्गानीदृशश्चोपासकः, तस्य चैतद् व्रतम्, ईदृंशि चोपासनानीदृशी चोपासकस्य गतिरीदृशी च फलप्राप्तिरित्येवंविधोपदेशमन्तरेण विध्यनुष्ठानासिद्धेः, तस्य पृथगुपदेशविधेरर्थवत्त्वात् ।

ब्रह्मविद्योपदेष्टुराचार्यस्याप्ययं नियमः— "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति। इदमेव वचनं सूतसंहितायाम्— "व्रतं पाशुपतं चीर्णं यैर्द्विजैरादरेण तु। तेषामेवोपदेष्टव्यमिति वेदानुशासनम्।।" इत्युपबृंहितम्।

बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति ।
इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ।।
वेदार्थोऽयं स्वयं ज्ञात्वा तत्राज्ञानं भवेदिति ।
ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यान्महात्मनाम् ।।

इत्यादिस्मृतौ स्वतन्त्रतया वेदार्थनिरूपणस्य निषिद्धत्वान्नान्यार्थो युक्तः शिरोव्रतशब्दस्य। एतद्व्याख्यानकृन्माधवाचार्योऽपि तद्वचनं वेदानुशासनमिति मन्यते। एतावता शिरोव्रतं पाशुपतव्रतमेव। एतदेव यावज्जीवलिङ्गधारणमहाव्रतमिति सिद्धम्,

लिङ्गाङ्गसङ्गिनां वत्स पुनर्जन्म न विद्यते ।
एष पाशुपताचारः पशुपाशनिवृत्तये ।।
सर्ववेदान्तसारोऽयमत्याश्रम इति श्रुतिः ।।
परब्रह्माभिधं लिङ्गं पशुपाशविमोचकम् ।
यो धारयति सद्भक्त्या स पाशुपत उच्यते ।
शरीरत्रितये भक्त्या लिङ्गं परशिवात्मकम् ।
यो धृत्वा विचरेद् भूमौ स पाशुपत उच्यते ।।

इत्यादित्यपुराणादिवाक्येषु पाशुपतशब्दस्य लिङ्गधारिपर्यायत्वेनाभिधानात्, प्राक् प्राकृतोपनयनदीक्षितस्यैव "अहरहः सन्ध्यामुपासीत", "स्वर्गकामो ज्योतिष्टोमेन यजेत" इत्यादिश्रुतिविहिताग्निष्टोमादिपशुधर्माधिकारवल्लिङ्गधारणदीक्षितस्यैव ज्ञानसमुच्चितशिवध्यानधारणार्चनार्पणार्पितग्रहणादिपतिकर्माधिकारसिद्धेरप्रत्यूहत्वात्। पाकस्य वह्निवन्मोक्षं प्रति लिङ्गदीक्षाया मुख्यसाधनत्वाल्लिङ्गधारणं मोक्षाङ्गमिति सिद्धान्तः।

अतः= अकारवाच्यस्य विष्णोः प्रसादादिति केचित्। तन्न, अकारस्य विष्णुवाचक-त्वेऽपि तत्प्रसादवाचकत्वाभावात्। अकारवाच्याद्विष्णोरेव ब्रह्मविचारः कर्तव्य इत्युक्तेर्विष्णोर्बोधकत्वेन जीवकोटिप्रविष्टत्वान्न ब्रह्मकोटिप्रविष्टत्वं सिध्यति। अत एव विष्णोरुपासककोटिनिवेशो नारायणोपनिषत्प्रसिद्ध इति हरदत्ताचार्योक्तिः संगच्छते। यद्यतःशब्दस्य विष्णुप्रसादादित्येवार्थस्तदाऽर्चनाद्याविर्भूततादृशमहापुरुषप्रसादादेव मुक्तिः स्यादिति शास्त्रवैयर्थ्यं सुदृढं भवेत्।

अपि च, सत्यपि विष्णुप्रसादे शास्त्रविचारमन्तरा मुक्तिर्नेति विष्णुप्रसादस्याकिञ्चित्करत्वात्। तस्माद् धर्मविचारस्य वृत्तत्वाद् ब्रह्मणः परिशेषितत्वादित्यतःशब्दार्थो वक्तव्यः। ब्रह्म च वक्ष्यमाणलक्षणं लिङ्गं प्रसिद्धतैत्तिरीयोपनिषदि— "आत्माय नमः" इत्यारभ्य लिङ्गशब्दपरम्परायाः श्रूयमाणत्वाद् लिङ्गमेव शिवः "शिवाय नमः शिवलिङ्गाय नमः" इति चतुर्थ्यन्तपदाभ्यां निर्णीयते। अयमेव शिवः —

"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः"

इति सृष्टेः प्रागपि वर्तत इति ज्ञायते। अस्यैव "शिवमद्वैतं चतुर्थम्" इति त्रिमूर्त्यतीतत्वम्, शिवज्ञानस्यैव —

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ।।

इति मोक्षसाधनत्वम्, तस्यैव "शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य" इति मुमुक्षूपासनाविषयत्वम्। अस्यैव —

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ।।

"तत्परं ब्रह्म स एक एव रुद्रः" इति च श्रुत्या परब्रह्मत्वं दृढं विजानीमः। तस्मात्तद्विचारः कर्तव्यः। तदितरविष्ण्वादीनां कार्यकोटिप्रविष्टत्वान्न ब्रह्मत्वम्,

"ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते" इति श्रुतेः। अत एवोक्तं श्रीरेणुकभगवत्पादैः —

शिव इत्यक्षरद्वन्द्वं परब्रह्मप्रकाशकम् ।
मुख्यवृत्त्या तदन्येषां शब्दानां गुणवृत्तितः ।। इति।

परब्रह्मैव लिङ्गम्।

अपरिच्छिन्नमव्यक्तं लिङ्गं ब्रह्म सनातनम् ।
उपासनार्थमन्तःस्थं परिच्छिन्नं स्वमायया ।।
लयं गच्छति यत्रैव जगदेतच्चराचरम् ।
पुनः पुनः समुत्पत्तिं तल्लिङ्गं ब्रह्म शाश्वतम् ।।
तस्माल्लिङ्गमिति ख्यातं सत्तानन्दचिदात्मकम् ।
बृहत्वाद् बृंहणत्वाच्च ब्रह्मशब्दाभिधेयकम् ।।

इति च। "यदन्तः समुद्रे कवयो वदन्ति...... तदेव ब्रह्म परमं कवीनाम्" इत्यादिमहानारायणोपनिषद्वाक्यगतयत्तच्छब्दानां शिवपरकत्वस्य तच्छैवभाष्ये सिद्धान्तिततत्वात्रात्र ब्रह्मशब्दो विष्णुपर इति मन्तव्यम्, लोकेऽहमिति प्रत्ययस्य शरीराद्यतिरिक्तस्वात्मब्रह्ममात्रविषयकत्वाभावात्। वेदे— "अहं ब्रह्मास्मि", "अयमात्मा ब्रह्म", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिना वाक्येन ब्रह्मणः परिच्छिन्नत्वापरिच्छिन्नत्वावगमाद् ब्रह्मणः सन्दिग्धत्वम्, "ब्रह्मविदाप्नोति परम्", "ईशं ज्ञात्वा अमृता भवन्ति", "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिवाक्येन सप्रयोजनत्वं च। तस्माद्व्याप्यजिज्ञास्यत्वं संभवत्येव। अतो ब्रह्ममीमांसाशास्त्रारम्भो युज्यत इति ।।१।।

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायमनुसृत्य उद्दिष्टस्य ब्रह्मणः किं लक्षणमित्याकाङ्क्षायां द्वितीयसूत्रं तल्लक्षणविधायकमवतारयति भगवान् बादरायणः —

## जन्माद्यस्य यतः ।।२।।

आद्यस्य विष्णोः, जन्म जननं यतो जातं तद्ब्रह्म। "आद्यं पुरुषमीशानम्" इति भारतवचनात् पुरुषपदार्थो हरिः, "पुरुसंज्ञे शरीरेऽस्मिन् शयनात्पुरुषो हरिः" इति श्रवणात्। तस्य जननं च "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते" इत्यादिश्रुतिषु श्रूयते। अथवा अस्य अकारवाच्यस्य विष्णोः, जन्मादि यतः सकाशात्तद् ब्रह्मेत्यर्थः। अथवा अस्य प्रत्यक्षादिप्रमाणसन्निधापितस्य चराचरात्मकस्य घटचैत्राद्युपलक्षितस्य

जगतो जन्मादि, जन्म आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। यतःपदेन कारणनिर्देशः कृतः। तथा च नामरूपव्याकृताचिन्त्यरचनारूपचेतनाचेतनात्मकस्य अस्य प्रपञ्चस्य यतो यस्माल्लिङ्गाद्ब्रह्मणो जन्मस्थितिप्रलयतिरोभावानुग्रहकृत्यं भवति तद्ब्रह्मेत्यर्थः। ''यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म तद्विजिज्ञासस्व'' इति श्रुतेः, ''प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः'' इति च।

जगज्जन्मादिपञ्चव्यापारेषु सृष्टिस्थितिलयाश्चेतनाचेतनोभयविषयाः, नियमनबन्धकारणतिरोभावशक्तिमोक्षकारणानुग्रहशक्तिद्वयं चेतनैकविषयमिति ध्येयम्। चतुर्मुखादीनां पञ्चानां जीवकोटिप्रविष्टत्वात्, अनात्मन्यात्माभिमानात् तत्परशिवमहालिङ्ग- नियम्यत्वान्न विश्वकर्तृत्वम्। ''सत्यं ज्ञानमनन्तं ब्रह्म'' इत्यादिश्रुतिभिः सूत्रानुक्तमपि स्वरूपलक्षणं ज्ञातव्यम्।

ननु जगज्जन्मादिकारणत्वं लक्षणं ब्रह्मणोऽनुपपन्नम्, कार्यकारणयोः सामानाधिकरण्याभावात्, जन्मादेर्जगन्निष्ठत्वादिति चेन्न, घटादेरुत्पत्तिविनाशयोः कालकरणाधीनत्वेनानुभूयमानत्वात्, करणानां कर्तृसापेक्षत्वात्, तस्य च देशकालाधीनत्वेन स्वतन्त्रेण पुरुषेण विना न कस्यचिदुत्पत्तिविनाशौ संभवतः। तस्माज्जगज्जन्मादेर्ब्रह्मनिरूपितकार्यत्वात् कार्यकारणयोः सामानाधिकरण्यात् यत्किञ्चिद्घटादिव्यक्तिं प्रति तस्य परम्परया कारणत्वेऽपि कार्यसामान्यस्य चराचरात्मकस्य शब्दार्थरूपस्य विश्वस्य साक्षात्कारणत्वात्।

ननु जगज्जन्मादिकारणत्वलक्षणं न ब्रह्मणः, किन्तु मायाया एव, ''मायां तु प्रकृतिं विद्यात्'' इति श्रुतेः, इति चेन्न, ''मायिनं तु महेश्वरम्'' इति वाक्यशेषात्, ईश्वरात्मिकाया एव प्रकृतित्वावगमात्। तथा च सूक्ष्मचिदचित्प्रपञ्चाकारशक्तिविशिष्टस्य ब्रह्मणः कारणत्वं स्थूलचिदचित्प्रपञ्चाकारशक्तिविशिष्टस्य कार्यत्वं सिद्धम्।

ननु ब्रह्मणो मिथ्याभूतमायाविशिष्टत्वे तस्यापि मिथ्यात्वात् शून्यमतप्रवेशापत्तिरिति चेन्न, ''मायां तु प्रकृतिं विद्यात्'' इत्यत्राध्यासिमतसिद्धमायाया अस्मदनभिमतत्वात्। किन्तु ''मं शिवम् अयति गच्छति नाम अविनाभावसम्बन्धेन वर्तते'' इति मायाशब्दस्य व्युत्पत्तिबलात् परशिवानुयोगिकसमवायतादात्म्यान्यतरसम्बन्धप्रतियोगिनी विमर्शशक्तिर्गृह्यते। इयमेव विमर्शशक्तिर्मयूराण्डरसगतपादपक्षवर्णवैचित्र्यन्यायेन स्वान्तर्लीनचराचरा सती विभागपरामर्शदशायां गुणत्रयात्मिका भवति। तदुक्तं भगवता रेणुकशिवाचार्येण —

गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी ।
तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा ।। इति।

तथा च शिवाविनाभूतसूक्ष्मचिदचित्प्रपञ्चाकारचिच्छक्त्युन्मेषनिमेषकृतौ जगतो जन्मप्रलयौ, शक्तेरुपादानकारणत्वात्। शिवस्यापि तन्तुवायस्येव स्वप्राधान्येन स्वशक्तिप्राधान्येन च निमित्तोपादानत्वं च सिद्ध्यति। कल्लटाचार्योऽप्याह —

यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ ।
तं शक्तिचक्रविभवप्रभवं शङ्करं स्तुमः ।। इति।

तस्माच्छिवाविनाभूतपराहन्तामयविमर्शशक्तेरङ्गीकरणीयत्वात्, पराभिमताध्यासशब्दिताविद्यायां मानाभावात्, अत एव तत्कृतजगतोऽपि मिथ्यात्वे मानाभावात्, "मायां तु प्रकृतिं विद्यात्" इत्यत्र मिथ्याभूतमायाया अग्राह्यत्वात्, शक्तेरेव मायाशब्दितत्वात्, शक्तिशक्तिमतोरभिन्नत्वात्, शक्तिविशिष्टस्य लिङ्गशब्दितस्य ब्रह्मणो जगज्जन्मादिकारणत्वलक्षणमुपपद्यते।

नन्वविद्या वस्तु लक्षणप्रमाणाभ्यां सिद्ध्यत्येव, कथं तत्र मानाभावः? लक्षणं तावत् — अनादिभावत्वे सति ज्ञाननिवर्त्यत्वम्। इदं च लक्षणं भाष्यकाराभिमतम्, "अनादिभावरूपा काचिदविद्या" इति, "अस्य चानर्थहेतोः प्रहाणाय" इति चोक्तत्वात्। ज्ञाननिवर्त्यत्वानुपादाने आत्मन्यतिव्याप्तिः। विशेष्यमात्रोपादाने प्रथमक्षणोत्पन्नज्ञानेऽतिव्याप्तिः, तस्य द्वितीयक्षणोत्पन्नज्ञानेन निवर्त्यत्वात्। अनादिपदेनैव तद्वारणे भावपदं व्यर्थमिति न भ्रमितव्यम्, ज्ञानप्रागभावेऽतिव्याप्तिवारणार्थत्वात्। न च रजतोपादानस्यानादित्वाभावात् तत्राव्याप्तिरिति वाच्यम्, तस्याप्यनादिचैतन्याश्रिततत्वेनानादित्वस्वीकारात्। न चाभावस्योपादाने अज्ञानेऽव्याप्तिः, तत्र भावत्वघटितलक्षणाभावात्, भावरूपाज्ञानस्याभावनिरूपितकारणत्वे स्वीकृतेऽसतः सदुपादानकत्वं स्यादिति वाच्यम्, तत्र भावत्वस्याभावविलक्षणमात्रत्वात्। अभावोपादानेऽज्ञानेऽप्यभावविलक्षणत्वस्वीकारान्नाव्याप्तिः। न चाविद्याचैतन्यसम्बन्धेऽतिव्याप्तिः, तस्याप्यविद्यात्मकत्वात् — इत्यादिनोक्तमज्ञानलक्षणं न संभवति, ज्ञानाज्ञानयोरहिनकुलादिवत् सहानवस्थानलक्षणविरोधाभावात्। अज्ञानस्य चन्द्रकलङ्कन्यायेन चैतन्याश्रितत्वस्वीकारात्, अन्यथा अज्ञानस्य निरधिष्ठानत्वप्रसङ्गात्, निरधिष्ठानविभ्रान्तेरप्रसिद्धत्वात्, लोके साधिष्ठानभ्रान्तेरेवानुभूयमानत्वात्। किञ्च, तयोः बध्यघातकरूपविरोधस्याप्यसत्त्वात्, अज्ञाने ज्ञाननिवर्त्यत्वाभावात्।

ननु शुक्तिरजतस्थले रजतज्ञानस्योत्तरक्षणवृत्तिशुक्तिज्ञानेन बाधदर्शनात् तत्त्वज्ञाननिवर्त्यत्वमज्ञानेऽस्तीति चेन्न, शुक्तिज्ञानरजतज्ञानयोर्घटपटज्ञानयोरिव

भिन्नकालभिन्नविषयत्वान्न बाध्यबाधकभावः। न च नेदं रजतम्, किन्तु शुक्तिरेवेत्युत्तरकालिकज्ञाननिवर्त्यत्वस्य रजतज्ञाने सत्त्वात् कथं न बाध्यबाधकभाव इति वाच्यम्, घटज्ञानानन्तरं पटं पश्यतः प्रमातुर्नायं घटः, किन्तु पट एवेति ज्ञानस्यापि घटज्ञाननिरूपितबाधकतापत्तेः। न च घटपटज्ञानयोर्भिन्नधर्मिकत्वात् तत्र बाध्यबाधकभावाभावाद् इदं रजतं नेदं रजतमिति पूर्वोत्तरज्ञानयोरेकधर्मिकत्वात् तद्वत्ताज्ञानं प्रति तदभाववत्ताज्ञानस्य बाधकत्वात् पुरोवर्तिनि रजतत्ववत्ताज्ञानस्य तदभाववत्ताज्ञानबाध्यत्वमिति वाच्यम्, दण्डभाण्डन्यायेन तयोः सामानाधिकरण्याभावात्, तयोर्भिन्नकालवृत्तित्वात्। न च विनश्यदवस्थापन्नरजतज्ञानस्य नेदं रजतमिति ज्ञानस्योत्पत्तिक्षणे विद्यमानत्वात् तयोः परस्परं सामानाधिकरण्यं संभवतीति वाच्यम्, ज्ञानाज्ञानयोर्जडत्वेन तयोस्तादृग्गौन्मुख्य-शून्यत्वात्। जडस्यान्तःकरणवृत्तिरूपस्य ज्ञानस्य रजताभावविषयकस्य पूर्वोत्पन्नरजत-भ्रान्तिनाशानुकूलकृतिमत्त्वाभावाद् बाध्यबाधकभावाभावात्। किन्तु घटज्ञानानन्तरं घटं त्यक्त्वा पटं पश्यतः प्रमातुरिच्छावशाद् घटज्ञानस्य निमेषः पटज्ञानस्योन्मेष इतिवद् एकस्मिन्नेव धर्मिणि सान्निध्यवशान्नीलपृष्ठत्वादिविशेषं पश्यतो दूरत्वादिनोद्भूतस्य प्राक्तनरजतज्ञानस्य निमेषः, नेदं रजतं शुक्तिरेवेत्युत्तरकालिकज्ञानस्योन्मेष इत्यङ्गीकर्तव्यमिति पूर्वाचार्याणामाशयः।

अपि च, ज्ञाननिवर्त्यत्वमित्यत्र ज्ञानं किं "यत् साक्षादपरोक्षाद् ब्रह्म" इति श्रुतिसिद्धमपरोक्षरूपं चैतन्यं वा, "अहं ब्रह्मास्मि" इत्यनुभववाक्यजन्यवृत्तिर्वा? नाद्यः, तादृशचैतन्यस्य सृष्टेः प्रागपि विद्यमानत्वेन तदैव मूलाज्ञानस्य नाशे तत्कृतपरिदृश्य-मानप्रपञ्चस्यापलापापत्तेः, तस्य निर्विशेषत्वेन नाशानुकूलकृतिमत्त्वाभावाच्च। न द्वितीयः, तादृशवृत्तेरज्ञानैककार्यत्वादुपादानोपादेययोर्भेदाभावात्, "मृत्तिकेत्येव सत्यम्" इत्यत्र मृद्व्यतिरेकेण कार्यस्यासत्त्वस्वीकारात्, तादृशवृत्तेरविद्यात्मकत्वात्, स्वस्य स्वेन साकं विरोधाभावात्, स्वनिष्ठबाध्यबाधकभावस्याननुभूतत्वात्, तस्य द्विनिष्ठस्यैवानुभवात्, कथञ्चिद्वृत्तेर्बाधकताङ्गीकारेऽपि वृत्तिबाधाय बाधकान्तरस्य स्वीकरणीयत्वेनानवस्था-पत्तेः। अन्यथा वृत्तिसत्त्वे मोक्षाभावप्रसङ्गः।

न च वननाशकाग्नेर्नाशकान्तराभावात् स्वयमेव यथा नश्यति, तथैव वृत्तिरपि स्वयं नश्यतीति वाच्यम्, तत्राग्नेर्वायुकालादीनां नाशकत्वकल्पनात्, नाशं प्रति स्वप्रतियोगिविजातीयपदार्थस्य नियमेन कारणत्वस्यैवानुभवात्। अनुभूयते च घटादिनाशो घटविजातीयदण्डादिना। भवन्मते तादृशवृत्तिनाशपूर्वभाविनः कस्यचित्तद्विजातीयपदार्थान्तरस्य सत्त्वे द्वैतापत्त्या मोक्षाभावप्रसङ्गात्। तादृशवृत्तिः स्वयं

नश्यतीत्युक्तमयुक्तम्। तस्मादज्ञाने ज्ञाननिवर्त्यत्वं नास्ति, तत् कथमुक्तमित्यालोचनीयम्। एवमनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमित्युक्तलक्षणे पूर्वोत्पन्नघटज्ञाने उत्तरक्षणोत्पन्नज्ञाननिवर्त्यत्वस्य सत्त्वात् तत्रातिव्याप्तिवारणायानादित्वपदमित्युक्त-मप्ययुक्तमेव, घटादिवृत्तेरप्यनादित्वात्। अन्यथा कालान्तरभावितद्विषयकस्मरणानुपपत्तेः। न च संस्कारद्वारा तदुपपद्यत इति वाच्यम्, ज्ञानान्तरेण घटाद्यनुभवनाशे संस्कारनाशस्यापि वक्तव्यत्वात्, तस्यापि घटविषयकत्वात्, घटविषयकानुभवस्यैव नाशो न तद्विषयकसंस्कारस्येत्यत्र विनिगमकाभावात्। वृत्तीनामिव तज्जन्यसंस्काराणामपि स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वमकामेनाप्यभ्युपगन्तव्यम्। तथा च स्मरणानुप-पत्तेर्दुर्वारत्वात् वृत्तेर्नित्यत्वम्।

अपि च, "अहं ब्रह्मास्मि" इत्यखण्डाकाराकारितचित्तवृत्तेर्नाशस्य स्वप्रति-योगिसमवायिदेशे स्वीकर्तव्यत्वाद् घटादेर्नाशस्य तथा दृष्टत्वाद् ब्रह्मणस्तादृशवृत्त्यु-पादानकारणत्वाभावाद् अज्ञानस्योपादानस्य च तदानीं नष्टत्वाद् वृत्तेः प्रागभावाप्रति-योगित्वाद् ध्वंसाप्रतियोगित्वाच्च न प्रागभावाप्रतियोगित्वरूपस्यानादित्वस्य सार्थक्यम्। न तावदज्ञानं प्रागभावाप्रतियोगि, जडत्वात्, घटवत्। किञ्च, तद्यदि स्वतः सिद्धं स्यात् तर्हि स्वप्रकाशं स्यात्। यदि परतः सिद्धं तदा घटादिवत्कार्यत्वेन तत्कारणान्त-रान्वेषणमुखेनानवस्था स्यात्। ज्ञानप्रागभावेऽतिव्याप्तिवारणार्थमुक्तं भावरूपत्वमपि न संभवति, नञर्थोल्लिखितत्वात्। यदि विरोधार्थकनञोऽधर्मादेरिवाज्ञानस्याप्युच्येत भावरूपत्वम्, तदा ज्ञानप्रागभावेऽतिव्याप्त्यभावात्तस्य वैयर्थ्यमेव स्यात्। उक्तरीत्या ज्ञानस्य प्रागभावाप्रतियोगित्वाद् अज्ञानेऽप्युक्तयुक्त्या ज्ञानविरोधित्वाभावात्। तस्मात् तत्कृतमज्ञानलक्षणमज्ञानविलसितमेव। एवमज्ञानसद्भावे प्रमाणं यद्यस्ति तत्किमज्ञानाद्भिन्नं वा? अभिन्नं वा? भिन्नं चेत्, अज्ञानभिन्नस्य ज्ञानैकरूपत्वेन प्रमाणस्य ज्ञानैकरूपत्वात् सत्तात्रयप्रसङ्गात्। अभिन्नं चेत्, इदं प्रमेयमिदं प्रमाणमिति विभागो न स्यात्।

यदि स्वसद्भावे स्वयमेव प्रमाणम्, तदा स्वप्रकाशतापत्तिः, आत्मवदन्यनिरपेक्षतया भासमानत्वादित्यादिदोषगणदूषितत्वात् तत् स्वीकृताध्यासशब्दिताज्ञाने प्रमाणं न पश्यामः। अहमज्ञ इत्यनुभवस्य चित्तोन्मिषच्चित्प्रकाशाव्यतिरिक्तज्ञानमलविषयकत्वात्, "गाढं मूढोऽहमस्वाप्सं न किञ्चिदवेदिषम्" इति सौषुप्तानुभवस्यापि तथात्वान्न तयोर्मिथ्याभूताज्ञाने प्रमाणतां मन्यामः। तथा च ज्ञानाज्ञानयोर्विरोधाभावान्निवर्त्य-निवर्तकभावासंभवाच्चित्तवृत्तेर्नित्यत्वेन लक्षणघटकानादित्वभावत्वयोः सार्थक्यभावाद् लक्ष्येऽपि तयोरभावादसंभवात् तत्र मानाभावाच्च न त्वदुक्तमज्ञानं सिद्ध्यति।

नन्वयं घट इत्यादिचित्तवृत्तेरिन्द्रियार्थसन्निकर्षजन्यत्वात् कथं नित्यत्वमिति चेन्न, इन्द्रियार्थसन्निकर्षस्य घटाद्यावरणस्वभावस्यान्धकारस्य निस्सरणं विना पूर्वं स्वत एव घटस्य प्रकाशाभावात्, दीपाद्यालोकसम्बन्धस्य बाह्यतमसो निस्सरणार्थत्वाच्चित्तवृत्त्यावरणस्वभावायाश्चित्तोन्मिषिताऽविद्याशक्तेस्तमसोऽभिभवार्थत्वाद् नेन्द्रियार्थसंयोगस्य चित्तवृत्तिकारणत्वं स्वीकुर्मः, यदि चित्तवृत्त्यावरणस्वभावाया अविद्याशक्तेर्नाशकारणस्येन्द्रियार्थसम्बन्धस्य चित्तवृत्तिकारणत्वम्, तदा घटावरणस्वभावस्य तमसो नाशकारणस्यापि दीपाद्यालोकसम्बन्धस्य घटकारणत्वं स्यात्, स्याच्च तन्नाशे घटनाशः। इष्टापत्तावनुभवविरोधः स्यात्। इन्द्रियजन्यत्वविशिष्टज्ञानत्वलक्षणस्य नित्यप्रत्यक्षरूपे आत्मन्यसत्त्वाद् अव्याप्तेः, तस्याजन्यत्वात्। न च तस्य जन्यप्रत्यक्षलक्षणत्वान्नाव्याप्तिरिति वाच्यम्, जन्यप्रत्यक्षस्यैकं लक्षणं तदन्यप्रत्यक्षस्यान्यल्लक्षणमिति लक्षणद्वैविध्यापेक्षया लाघवादजन्यत्वमेव प्रत्यक्षसामान्यलक्षणमिति वक्तुमौचित्यात्।

ननु घटादिप्रत्यक्षस्याप्यजन्यत्वे तस्य सदातनत्वं स्यात्, स्याच्च तदङ्गीकारे आलोकादिसहकृतेन्द्रियसंयोगादिवैयर्थ्यमिति चेत्, भवन्मतेऽप्यात्मसाक्षात्कारस्याजन्यत्वात्सदातनत्वप्रसङ्गात्, श्रवणमननिदिध्यासनानां वैयर्थ्यात् शास्त्रमनारम्भणीयं स्यादिति महान् दोषः। तत्परिहाराय ब्रह्मणो नित्यापरोक्षरूपत्वेऽपि तदावरणाज्ञाननाशायान्तःकरणवृत्तेरखण्डाकारायास्तस्याः श्रवणादिसाध्यत्वेन तेषां साफल्यस्य वक्तव्यत्वे मन्मतेऽपि घटादिप्रत्यक्षस्याजन्यत्वेऽपि तदावरणभङ्गायेन्द्रियवृत्तेस्तदर्थमालोकादीनां च साफल्यस्य वक्तव्यत्वान्न घटादिप्रत्यक्षस्य सदातनत्वम्।

न चैकदा चक्षुरिन्द्रियार्थसंयोगेन तत्तद्विषयाकारचित्तवृत्त्यावरणभङ्गेऽन्धस्यापि पूर्वदृष्टसकलवस्तुप्रत्यक्षापत्तिः, नित्यसिद्धत्वात् तादृशवृत्तीनामिति वाच्यम्, आविद्यकानां तूलावरणानां बहूनां विद्यमानत्वेन कस्यचिदावरणस्य तदानीं नाशेऽपि कालान्तरे तथैवावरणान्तरसत्त्वात्। तथा च चित्तवृत्तीनां नित्यत्वाद् वृत्तित्वव्याप्यपरब्रह्मापरपर्यायमहालिङ्गाङ्गभेदाकारशुद्धचित्तवृत्तेरपि नित्यत्वं वक्तव्यम्, अन्यथाऽनेकसाधनानुष्ठानसमुपार्जिताया अपि शुद्धचित्तशक्तेर्भोगसाधनीभूताया विरहे आत्मनो निरतिशयसुखस्य सत्त्वेऽपि किं प्रयोजनम्? तदनुभवरूपभोगाभावात्। किं वा प्रयोजनं रमणीविरहितत्वेऽलङ्कृतकेलीगृहेण, उन्मत्तजनोपदेशेन, अन्धस्य रूपलावण्येन च।

वृत्तिनित्यत्ववादे "चिन्मात्रोऽहं सदाशिवः" इति परमेष्ठिकृतोपदेशोऽपि संगच्छते। वृत्त्यनित्यत्वपक्षे "चिन्मात्रोऽहं सदाशिवः" इत्याकारचित्तवृत्तेर्नष्टत्वाद् आश्वलायनं प्रति तादृशोपदेशो न संगच्छते, चित्तस्य नाशाङ्गीकारात्। "चिन्मात्रोऽहं सदाशिवः" इति

वाक्ये चिन्मात्रः सदाशिव इत्याकाराया आत्मविषयिण्या बुद्धेरभिनयपुरस्सरमुपदेशायोगात्। मन्मते तु आत्मसुखाद्याकारबुद्धेर्नित्यत्वाङ्गीकारात् "चिन्मात्रोऽहं" इत्यभिनीय कृतोपदेशस्योपपन्नत्वात्। तथैवाश्वलायनोऽपि "चिन्मात्रोऽहं सदाशिवः" इत्याकारां बुद्धिरूपिणीमात्मशक्तिं गृह्णानो मुक्तो भवतीति वक्तव्यम्। तथैवोच्यते श्वेताश्वतरोपनिषद्यपि — "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति।

अस्यार्थः — भित्तिमेघादिव्यवहितदीपदीपिकाप्रभाकरप्रभाणामदर्शनात् स्वगुणैः स्वस्मिन् घृतकाठिन्यन्यायेन चेतनाल्लोमनखादिवद्विजृम्भितैर्गुणैराणवादिमलैर्निगूढामावृतां व्यवहितामित्यर्थः। देवात्मशक्तिं क्रीडाशीलस्य शिवस्य आत्मनः स्वस्य शक्तिं "चिन्मात्रोऽहं सदाशिवः" इत्याकारां साक्षात्कर्तुमशक्तास्ते ऋषयो गुरुमुखाद् ध्यानयोगोपायमनुगताः सन्तो मेघाद्यपाये सूर्यतदालोकदर्शनवद् व्यवधानात्मकमलापगमे नित्यसिद्धामेव स्वात्माभिन्नशक्तिं दृष्टवन्तः। तादृशात्मशक्तिविकासनानन्तरमात्मस्वरू-पावरणस्वभावमपि मलं तादृशाविर्भूतस्वशक्तिरेव विच्छिनत्ति। तदनन्तरं स्वसाक्षिणं स्वाभिन्नं शिवमात्मानं विनिश्चिनुते। स्वशक्तिविकासे उपायाश्चोक्ताः शक्तिसूत्रे — "विकल्पक्षयशक्तिसङ्कोचविकासप्रवाहच्छेदाद्यन्तकोटिनिभालनादय इहोपायाः" इति, "मध्यविकासाच्चिदानन्दलाभः" इति च।

तस्मादात्मविषयिण्याः सर्वात्मकः शिवोऽहमित्याकाराया बुद्धिशक्तेर्नैरन्तर्याय साधनाभ्यासः कर्तव्यः। विघ्नबाहुल्येन शिवजीवसामरस्यध्यानादिसाधनाभ्यासविच्छेदे शिवात्मैक्याज्ञानात्मकावरणकृतसांसारिकदुःखस्फूर्तिरनुभवसिद्धैवेतिवत् शरीरपातानन्तर-मप्यात्मविषयिणी बुद्धिर्यदि नष्टा भवेत्तदाऽकृतश्रवणादिपुरुषवद्धर्मानुवृत्तिस्तत्कृतजन्मा-न्तरसुखदुःखानुवृत्तिश्च स्यादेव। तस्मात् सर्वातिशायिन्या आत्मविषयिण्या बुद्धेरात्मनश्च नित्यसम्बन्धात् "आत्मरतिरात्मक्रीडः" इति श्रुत्युक्ता आत्मविषयकरतिक्रीडादिगुणाः पुष्पगन्धवज्जलशैत्यवदग्न्युष्णस्पर्शवद्दीपदीप्तिवदहिकुण्डलवत्संगच्छन्तेतराम्। तस्मान्नित्यसिद्धा आत्मविषयिणी बुद्धिशक्तिरात्मस्वरूपावरणं विनाश्य स्वाभिन्नं स्वसा-क्षिणमात्मानं निश्चिनोति। न च बुद्धिशक्तेर्दृश्यत्वाद् आत्मनो द्रष्टृत्वाद् आत्मा दृश्याद् भिन्नः, द्रष्टृत्वात्, घटद्रष्टृवत् — इत्यनुमानेन तयोर्भेदसिद्धौ कथमभेद इति वाच्यम्, अपरोक्षं द्विविधम् — स्वस्वरूपापरोक्षं स्वभिन्नापरोक्षमिति। स्वभिन्नघटाद्यपरोक्षे द्रष्टा दृश्याद् भिन्नः स्यात्। स्वस्वरूपापरोक्षे तु न तथा तादृशानुमानस्य स्वभिन्नापरोक्षविषयत्वं वाच्यम्, स्वस्वरूपापरोक्षे तयोर्भेदानुमाने दृष्टान्ताभावाद् व्याप्तिज्ञानानुदयात्।

स्वशक्तिस्वस्थतादशायाम् — अहमस्मि, प्रकाशे, नन्दामीति सच्चिदानन्दाकारानुभवाकाराया नित्यसिद्धाया वृत्तेरवश्यमात्मनो वक्तव्यत्वादात्मनः शक्तिवैशिष्ट्यं सिद्धम्, अन्यथानात्मत्वस्य दुर्वारत्वात्, घटस्य स्वस्वरूपज्ञानराहित्यादनात्मत्वात्। तद्वदात्मनोऽपि तथात्वेऽनात्मत्वं वज्रलेपायत एव। अत एवोक्तं श्रीस्वप्रभानन्दशिवाचार्येणापि — "ब्रह्माद्वैतमनात्मकल्पमितरैराभण्यते" इति। अहेः कुण्डलमिति अहिरेव कुण्डलमिति च प्रतीत्या कुण्डलवैशिष्ट्यं कुण्डलाभिन्नत्वमहेरिव शक्तिवैशिष्ट्यं शक्त्यभिन्नत्वमात्मनः सिद्ध्यत्येव।

ननु सत्ताद्यनुभूत्यादेरात्मधर्मत्वे "कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतिविरोधः, तत्र कामादिसकलवृत्तीनां मनोधर्मत्वावगमात्? इति चेन्न, अन्तःकरणधर्माः सर्वेऽप्यात्मधर्मा भवन्त्येव चित्तात्मनोरभिन्नत्वात्। "चैतन्यमात्मा", "चित्तमात्मा" इति शिवसूत्रस्थितेः, अहमिच्छामीत्यादिप्रतीत्या इच्छाज्ञानादीनामात्मधर्मतावगमात्।

ननु चित्तस्य सादित्वात्, "स मनोऽसृजत" इति श्रुतेः, तदभिन्नत्वे आत्मनोऽपि सादित्वापत्तिरिति चेन्न, यथा चितेर्बुद्धिशक्तेश्चित्तदशा, तस्या तामस्या अविद्याशक्तेः सादित्वपरत्वात्, "प्रज्ञानं ब्रह्म" इति श्रुतेः प्रज्ञानपदवाच्यचिच्छक्तेर्ब्रह्माभिन्नत्वावगमात्।

"स्वशक्तिक्षोभमात्रेण स्थलं तद् द्विविधं भवेत्", "क्षुभिता च विश्वविस्तारा" इत्युक्तप्रकारेण सृष्ट्युन्मुखावस्थायां कूर्माङ्गभङ्गिन्यायेन तस्या आविर्भावमात्रं वक्तव्यम्। श्रुतिरपि तथैवाभिवदति — "प्रज्ञा च तस्मात् प्रसृता पुराणी" इति, "नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं धर्मो धर्मीति भेदद्वयमपि पृथगभूय मायावशेन" इत्यभियुक्तोक्तेः, एकस्यैव ब्रह्मणो धर्मधर्मिभावाद् बुद्धिधर्माः सर्वे बुद्ध्यभिन्नात्मधर्माः, आत्मधर्मा आत्माभिन्नबुद्धिधर्मा भवितुमर्हन्त्येव।

अत्राध्यासवादिनस्तु "अयो दहति" इतिवद् इतरेतराध्यासं वदन्ति। तथा हि — वर्तुलत्वाद्ययोधर्मात्यन्ताभावाधिकरणे वह्नावयसो दाहकत्वात्यन्ताभावाधि-करणेऽयसि वह्नेस्तादात्म्याध्यासाद् इमे वर्तुलत्वादयोऽयोधर्माः, इमे दाहकत्वादयो वह्निधर्मा इति भेदस्याग्रहाद् अयोवह्नितद्धर्माणां चेतरेतराध्यासः, एवं नीरत्वेन क्षीरत्वेन चानुभवविषययोर्नीरक्षीरयोः संयोगानन्तरं तयोः पूर्वानुभूतभेदस्याग्रहाद् अध्यास इव च सत्यज्ञानानन्दादयो न बुद्धिधर्माः, कामादयो नात्मधर्मा इति भेदस्याग्रहाद् भवति तत्तद्धर्माणामितरेतराध्यासः। तस्मादहमिच्छामि, जानामि, करोमीति प्रतीतेरध्यासकृतत्वान्न याथार्थ्येनात्मनीच्छादिबुद्धिधर्मा बुद्धौ च सत्यज्ञानानन्दा वक्तुं शक्यन्त इति चेन्न,

दृष्टान्तवैषम्यात्। तत्र भेदं चाभेदं चापि निश्चेतुमशक्यत्वात्, वह्निसंयोगात्पूर्वमयोवह्न्योरेकस्मिन्ननुभवसिद्धानां वर्तुलत्वनीलरूपत्वादीनां रोहितरूपोष्णस्पर्शादीनां च भेदं प्रत्यक्षसिद्धं वह्निसंयोगानन्तरं न जानाति, तदभेदं चापि न जानाति, पूर्वानुभूतस्य भेदस्यानुभविष्यमाणत्वात्, एवं संयुक्तनीरक्षीरयोरपि पूर्वगृहीतभेदस्याप्यज्ञायमानत्वाद् अभेदस्याप्यज्ञायमानत्वाच्च। इदं शुद्धक्षीरविलक्षणजलसंयुक्तं पूर्वानुभूतशुद्धक्षीरविलक्षणत्वात्, इत्यनुमानेन भेदस्याप्यनुमेयत्वाद् इतरेतराध्यासोऽयुक्तः।

अत्र तु कामाद्याश्रयत्वेन बुद्धेश्चेतनमन्तरा केनाप्यनुभूयमानत्वाभावाद् बुद्धिमन्तरा सत्यज्ञानानन्दाश्रयत्वेन अकामाद्याश्रयत्वेन च चिदात्मनः केनाप्यनुभूयमानत्वाभावाच्च नेतरेतराध्यासकृतश्चेतनोऽहं करोमीच्छामि जानामीति व्यवहारः। तस्माद् बुद्धितत्साक्षिणोर्नीरक्षीरवत्, अयःपिण्डवह्निवन्नाध्यासः, प्रत्यक्षादिप्रमाणविरुद्धत्वादहं सुखीत्याद्यनुभवविरोधाच्च विचार्योऽयमध्यासोऽध्यासवादिभिरेव। "इत्येतत्सर्वं मन एव" इति श्रुतावेवकारेण यदीच्छादीनां मनोमात्रधर्मता बन्धविशिष्टस्य जीवस्यात्मनः श्रवणजिज्ञासामननादिसाधनाभावात् सर्वदा बद्धत्वप्रसङ्गः स्यात्। नहि कश्चिदन्यः संसारबन्धनबन्धितं विना तद्बन्धननिवृत्त्युपायं मृगयति। आत्मनो बन्धे आत्मनैवात्मा जिज्ञास्य इति युक्तम्, तथा चोक्तश्रुतेरात्माभिन्नमनोमात्रधर्माः कामादय इति तात्पर्यम्। अत एव "तस्मिन् कामाः समाहिताः" इत्यत्र सम्यक्पदस्वारस्येन कामादीनामात्मधर्मता श्रूयते। नहि चन्द्रचन्द्रिकयोराह्लादकत्वादयो धर्मास्तदन्यतरस्मिन्नैवेति वक्तुं शक्यते, किन्तु चन्द्रधर्माश्चन्द्रिकायां चन्द्रिकाधर्माश्चन्द्रे संभवन्त्येव। तस्मान्मनःशब्दितबुद्धिधर्मा आत्मनि, आत्मधर्माश्च मनसीति युज्यते। शिवयोगशब्दितलिङ्गाङ्गसामरस्यनिरस्तसमस्ताशुद्ध्यात्मकमलस्य चित्तस्य चिच्छक्तिरूपत्वात् तद्गतजगज्जन्मादिजनकत्वादिधर्मास्तद्विशिष्टे चिद्रूपे शिवे संभवन्त्येव। तदुक्तं श्रीरेणुकशिवाचार्येण —

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी ।
तथा शक्तिर्विमर्शात्मा प्रकाशे ब्रह्मणि स्थिता ।। इति।

इयमेव शक्तिः "आकाशो वै नामरूपयोर्निर्वहिता", "यदेष आकाशो आनन्दो न स्यात्", "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्यादिश्रुतावाकाशप्राणादिशब्देनाभिधीयते। अनयैव च चिदम्बरशक्त्या सकलचेतनकृतबहुविधकर्मफलभोगानुकूलतत्तच्छरीरनिर्माणसामग्रीविशेषं जानाति, स्वरूपनिरतिशयानन्दमनुभवति च परशिवब्रह्म। तस्मात् सर्वज्ञं नित्यतृप्तं च स्वरूपानन्दानुभवसाधनीभूतायास्तस्याः पराहन्तामयचिच्छक्तेरस्य ब्रह्मणोऽनादिसिद्ध-

त्वादनादिबोधं च, स्वस्वाभाविकशक्तिव्यतिरिक्तपरमाण्वादिनैरपेक्ष्येण सर्वं करोमीतीत्यतः स्वतन्त्रशक्तेः सहजसिद्धत्वादपरिच्छिन्नत्वाच्च अलुप्तशक्तिमद् अनन्तशक्तिमच्च, "यः सर्वज्ञः स सर्ववित्", "आनन्दो ब्रह्म", "शान्तिसमृद्धममृतम्", "विद्याविद्ये ईशते यस्तु सोऽन्यः", "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "यः सर्वान् लोकानीशते ईशनीभिर्जननीभिः परमशक्तिभिः" इत्यादिश्रुतेः।

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।।

इति पारमेश्वरागमवाक्यात् सर्वज्ञत्वादिशक्तिविशिष्टं ब्रह्म न निर्विशेषम्। इयमेव पारमेश्वरी ज्ञानक्रियासामरस्यात्मिका शक्तिः स्वोन्मिषितमायाशक्तिप्रविष्टा सती गुणत्रयात्मिका भवति। गुणत्रयतारतम्याद् भोज्यभोक्तृप्रेरकलक्षणं वस्तुत्रयमुत्पद्यते। तथा चैकमेव ब्रह्म सर्वज्ञताशक्त्या निमित्तमनन्तशक्त्या च जगदुपादानं च भवति। यदि कुलालादेरिव ब्रह्मणः केवलं निमित्तहेतुत्वमेवोच्येत, तर्ह्यनीश्वरत्वमापद्येत, स्वातिरिक्तकारणान्तरसापेक्षत्वात्। तदुक्तमागमरहस्ये — "येऽपीश्वरं व्यपदिशन्ति निमित्तहेतुं तैरर्पितः स्थलजलाञ्जलिरीशितायै। अन्याङ्गनोपगमनेन वशीकृतस्य कामीश्वर-स्थितिममी बत सङ्गिरन्ते।।" इति। तस्मादग्निरिव दहने, चिन्तामणिकामधेनु-कल्पवृक्षवदीप्सितार्थनिर्माणे, योगीव च ऊर्णनाभवच्च तन्तुनिर्माणे, परशिवब्रह्म विश्वनिर्माणे कारणान्तरनैरपेक्ष्येण स्वशक्त्यैव विश्वं सृजति, पालयति, संहरति, नियमयति, अनुगृह्णातीति राद्धान्तः। तदुक्तमीश्वरप्रत्यभिज्ञायाम् —

चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद् बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ।। इति।

उक्तं च षाड्गुण्यविवेके —

नहि बोधो विचित्रार्थनिर्माणेऽन्यमपेक्षते ।
सङ्कल्पादेव यो रूपसहस्राणि सृजत्यजः ।।

"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" इति शक्तिसूत्रस्थितेश्च सर्वं विश्वमण्डरसन्यायेन सृष्टेः प्रागासीत्। तदुक्तं प्रत्यभिज्ञायाम् — "यत्किञ्चिदाभाति बहिस्तदीश ! नूनं तवास्त्येव समस्तमन्तः। निमीलिताक्षा हृदि लक्षयेयुस्तथैव सर्वं कथमन्यथा तत्।।" इति। यदि जगतस्त्रैकालिकनिषेधप्रतियोगित्वम्, तदा "यथोर्णनाभिः सृजते ग्रसते", "नासतो विद्यते भावो नाभावो विद्यते सतः" इति श्रुतिकृष्णगीतोक्तिविरोधः स्यादेव। तस्माज्जगतस्त्रैकालिकनिषेधाप्रतियोगित्वरूपं सत्यत्वं वाच्यम्, ऊर्णनाभिदृष्टान्ता-

नुरोधात्। परशिवब्रह्म स्वचिच्छक्तिगतसूक्ष्मचिदचित्प्रपञ्चमेव नामरूपविभागार्हत्वेनाविर्भावयतीति बालिशोऽपि जानात्येव। वर्तमानकालेऽपि तस्य परिदृश्यमानत्वात् को वा जडो नास्तीति जानीयात्। भविष्यत्काले तस्य स्वकारणे लयस्वीकारात् कारणरूपेण स्थितत्वान्न तस्यात्यन्ताभावः, तस्मान्नानित्यत्वं जगतः। न च विश्वस्य सत्यत्वे तदन्तर्गतबन्धस्यापि सत्यत्वात् तन्निवृत्तिर्न स्यादिति वाच्यम्, ईश्वरेच्छायास्तत्र नियामकत्वाद् इच्छाभूमिप्रविष्टघटादिवन्न मुक्तस्य पुनर्बन्धप्रसङ्गः —

यथा सुभर्जितं बीजं नेह भूयः प्ररोहति ।
विकल्पक्षीणचित्तस्य तथा भूयो न संसृतिः ।।

इत्युक्तत्वाच्च प्रपञ्चसत्यत्वे बाधकाभावात्। यथोर्णनाभिः स्वशरीरोन्मिषिततन्तुजालं प्रति स्वशरीरत उपादानकारणं स्वतो निमित्तकारणम्, तथा ब्रह्म स्वशक्तित उपादानकारणं स्वतो निमित्तकारणं च भवति। तदुक्तमभियुक्तैः —

शक्त्यण्डमृत्पिण्डमुपाददानो मायाण्डचक्रभ्रमणक्रमेण ।
मूलाण्डदण्डेन मुहुर्विधत्ते ब्रह्माण्डभाण्डं भगवान् कुलालः ।। इति।

तथा च "जन्माद्यस्य यतः" इत्यनेन स्वतन्त्रापरिच्छिन्नस्वप्रकाशरूपपराहन्तामयचिच्छक्तिविशिष्टलिङ्गरूपं ब्रह्म जगज्जन्मादिकारणमित्युक्तं भगवता बादरायणेन। तथैव तदुपासितव्यम्, अन्यथा ब्रह्मव्यतिरिक्तासत्यमायाशक्तिप्रतिबिम्बरूपस्य ईश्वरस्य मिथ्यात्वादुपासकस्य तदापत्तेर्दुर्वारत्वात्, निर्विशेषस्य तूपासनाविषयत्वाभावाद् उपास्यवस्तुस्वरूपज्ञानमन्तरोपासनस्यैवासिद्धेः। तस्मात् तज्ज्ञानार्थं सविशेषं ब्रह्म उद्दिष्टं प्रथमसूत्रे जिज्ञास्यत्वेन, अन्यथा तस्य कर्तृत्वादिशून्यत्वाज्जगज्जन्मादिकारणत्वरूपं लक्षणमसङ्गतमेव स्यात्।

न चोद्दिष्टं निर्विशेषं जगज्जन्मादिकारणत्वलक्षणलक्षितं सविशेषमिति वाच्यम्, अनुद्दिष्टपदार्थस्य किं तदित्याकाङ्क्षाया अनुदयात्, तथापि तल्लक्षणे उक्ते वक्तुरुन्मत्तत्वापत्तेरनुद्दिष्टपदार्थलक्षणकथनस्य शास्त्रकृद्भिरनङ्गीकृतत्वात्। निर्विशेषब्रह्मपक्षे "जन्माद्यस्य यतः", "शास्त्रयोनित्वात्" इत्यादिसूत्रकर्तुस्तात्पर्याभावात् सविशेषं ब्रह्मैवोद्दिष्टम्, तस्यैव "जन्माद्यस्य यतः" इति जगज्जन्मादिकारणत्वलक्षणं कथितमिति बाढं जानीमः।।२।।

प्रथमाधिकरणे जिज्ञास्यत्वेनोद्दिष्टस्य शक्तिविशिष्टब्रह्मणो जगज्जन्मादिकारणत्वं लक्षणं कथितं द्वितीयेन च। तत्र किं प्रमाणमित्यत्राह —

## शास्त्रयोनित्वात् ।। ३ ।।

शास्त्रम् — "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद्विजिज्ञासस्व", "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिकंयोनिः प्रमाणं यस्य तस्य भावस्तत्त्वम्, तस्मात् शास्त्रप्रमाणकत्वादित्यर्थः।

ननु जगत्कारणस्य ब्रह्मणो न शास्त्रैकसमधिगम्यत्वम्, अनुमानादिप्रमाणान्तरेणाप्यधिगम्यत्वात्। तथा चोक्तम् — "कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः।।" इति चेन्न, जगतो निमित्तोपादानशक्तिविशिष्टैककर्तृत्वस्योक्तकार्यादिपक्षकानुमानैरसिद्धेः, घटस्य कुलालादिवन्निमित्तकारणत्वसिद्धावप्युपादानकारणत्वासिद्धेः। निमित्तत्वमुपादानत्वं चैकस्यैव "यथोर्णनाभिः सृजते ग्रसते" इत्यादिदृष्टान्तश्रुत्या ज्ञायते। "यतो वेमानि भूतानि जायन्ते" इत्यनेन निमित्तकारणत्वम्, "यत्प्रयन्त्यभिसंविशन्ति" इत्यनेनोपादानकारणत्वं चोपदिश्यते। तथा चाभिन्ननिमित्तोपादानकारणत्वरूपैककर्तृकत्वासिद्धेः शास्त्रैकगम्यत्वं ब्रह्मणः सिद्धम्। अनुमानस्य प्रत्यक्षमूलकत्वात्, परिच्छिन्नत्वात्, अपरिच्छिन्नब्रह्मविषयकत्वाभावात्, अपरिच्छिन्नब्रह्मप्रकाशनापाटवात्, स्वप्रकाशब्रह्मात्माधीनसिद्धिकत्वात्, "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः। ब्रह्मात्मकचैतन्यस्यानुमानविषयत्वेऽनुमानान्तर्गतत्वादपरिच्छिन्नत्वभङ्गः स्यात्।

न चाकाशस्य शब्दपक्षकानुमानान्तर्गतत्वेऽपि तस्यापरिच्छिन्नत्वमिवात्मनोऽपि किं न स्यादिति वाच्यम्, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः", "आत्मन आकाशः संभूतः" इत्यनेन वाक्येनाकाशस्यापि जन्यत्वात् परिच्छिन्नत्वात्, तद्दृष्टान्तवैषम्यात्, "आकाशवत्सर्वगतश्च नित्यः" इत्यादिश्रुत्याऽऽकाशस्य सातिशयव्यापकत्वं बोध्यते, न तु निरतिशयसर्वगतत्वम्, अन्यथाऽऽकाशस्य जन्यत्वबोधकश्रुतिविरोधः स्यात्। "यत् स्वातिरिक्तप्रमाणविषयं तत्परिच्छिन्नम्, यत्परिच्छिन्नं तदनित्यम्, घटवत्" इत्यात्मनोऽपि नित्यत्वं व्याहन्येत। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतिभिरात्मनः स्वातिरिक्तप्रमाणमार्गाद् दूरवर्तित्वमुच्यते। तथाप्यनुमानसाध्यतां वदतां स्वपादेन स्वशिरश्छायोल्लङ्घनोद्युक्तमूर्खशिशुसादृश्यमेव स्यात्। उक्तं च तन्त्रालोकेऽतिरिक्तप्रमाणाविषयत्वम्— "प्रकाशो नाम यश्चायं सर्वत्रैव प्रकाशते। अनपह्नवनीयत्वात् किं तस्मिन् मानकल्पनैः।।" इति। "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मणः परिच्छेदाभावस्य श्रुतत्वादनुमानकृतपरिच्छेदस्य स्वीकारे श्रुतिविरोधापत्तेः। तस्माच्छ्रुत्यानुकूल्येनैवानुमानानां प्रामाण्यं वक्तव्यम्।

ननु शास्त्रस्यापि ब्रह्मणो जगज्जन्मादिकारणत्वे कथं प्रामाण्यम्, परिच्छिन्नत्वात्, तदतिरिक्तत्वात्। स्वव्यतिरिक्तप्रमाणविषयत्वेन ब्रह्मणः परिच्छिन्नत्वादनित्यत्वापत्तेः। "विज्ञातारमरे केन विजानीयात्" इत्यादिना श्रुतिवाक्येन यावत्प्रमाणप्रवृत्त्यसंभवस्य श्रुतत्वाच्च न शास्त्रप्रमाणकत्वं जगज्जन्मादिकारणे ब्रह्मणीति चेन्न, निगमागमादिसकलविद्यानां परशिवब्रह्माविर्भूतत्वात्, तदुपादानकत्वात्तदात्मकत्वात्, "अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेदः" इति श्रुतेः, "तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे", "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्", "योऽयं नकारः सोऽयमकारः स सद्योजातो भूर् ऋग्वेदः सम्पुट उच्यते" इत्यादेः, "योऽयं मकारस्तदिदं समस्तमोमिति निर्विशेषः प्रणवः सर्वोत्तर ईशान आकाश आगमो लिङ्गमुच्यते" इत्यन्तश्रुतेश्च, "अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्। आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः।।" इति पुराणोक्तेः, "तावल्लोकास्त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः। शिवसृष्टाः" इति धर्मशास्त्रोक्तेः। वेदादेः शिवजन्यत्वान्न चतुर्मुखजन्यत्वम्, तदुत्पत्तेः प्रागपि वेदसत्त्वात्, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः, "ब्रह्मा देवानां प्रथमः संबभूव" इति च श्रुतेः, "तस्मै प्रथमपुत्राय शङ्करः शक्तिमान् विभुः। सर्वज्ञः सकला विद्याः सानुग्रहमुपादिशत्।।" इति सिद्धान्तशिखामण्युक्तेश्च।

श्रीशङ्करोपदिष्टसकलविद्यस्य ब्रह्मणः पुनराविर्भूतत्वान्न चतुर्मुखजन्यत्वप्रतिपादिन्याः "षड्ढोता वै भूत्वा प्रजापतिरिदं सर्वमसृजत, ऋचो यजूंषि सामानि" इत्यादिश्रुतेर्विरोधः। ग्रीष्मे भूविलीनदूर्वादेर्वर्षाकाले पुनराविर्भाववत् सृष्टेः प्राक् पारमेश्वरविमर्शशक्तिविलीनवेदशब्दराशेः सृष्टिकाले पुनराविर्भावस्याभ्युपगमान्न वेदनित्यत्ववादिन्योः "वाचा विरूपनित्यया", "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति श्रुतिस्मृत्योर्विरोधः। बीजाङ्कुरवदवस्थितस्यैव प्रकटीकरणत्वं जन्यत्वमित्यस्मदभ्युपगमान्न जन्यत्वाजन्यत्वपरश्रुत्योर्विरोध इति बोध्यम्। तथा च स्मृतिरपि वदति पञ्चाननाननोद्भूतत्वं वेदादीनाम् — "अष्टादशानामेतासां विद्यानां ब्रह्मवर्त्मनाम्। आदिकर्ता शिवः साक्षात् शूलपाणिरिति श्रुतिः।। सद्योजातेन ऋग्वेदं वामदेवेन याजुषम्। अघोरेण तथा साम पुरुषेण त्वथर्वणम्।। ईशानेन मुखेनैव कामिकाद्यागमांस्तथा। जनयामास विश्वेशः सर्वसिद्धिप्रदायकः।। विमर्शरूपिणी शक्तिः शिवस्य परमात्मनः। निगमागमरूपा स्यात् सर्वतत्त्वप्रकाशिनी।। तस्माद्वेदागमार्थेषु यः कुर्याद् भेदभावनाम्। ससहस्रकुलं घोरे नरके पतति ध्रुवम्।।" इति। तस्मात् परमेश्वरस्य निगमागमादिसर्वविद्याकर्तृत्वप्रतिपादनात् सृष्टेः पूर्वं स्वशक्तिविलीननिगमागमादीनां पुरुषनिःश्वसितवदप्रयत्नेन पूर्वपूर्ववर्णानुपूर्व्यनुरूपरचनया सर्वज्ञस्य शिवस्य वेदादिकर्तृत्वसंभवाद् वेदादीनां पौरुषेयत्वमपौरुषेयत्वं च।

ननु निगमागमानां नित्यत्वे "न सन्न चासच्छिव एव केवलः", "एक एव रुद्रो न द्वितीयाय तस्थे", "नेह नानास्ति किञ्चन", "न द्वितीयमस्ति", "नान्यत् किञ्चन मिषत्" इत्यादिश्रुतिषु सृष्टेः प्राग् द्वितीयवस्तुनिषेधः कथमुपपद्यते? इति चेन्न, तत्र शिवगतसूक्ष्म-परा-विमर्शशक्त्यपरपर्यायप्रज्ञाशक्तेरनिषिद्धत्वात्। कथमन्यथा "प्रज्ञा च तस्मात् प्रसृता पुराणी" इत्युत्तरोक्तं शिवाविर्भूतत्वं प्रज्ञाशक्तेर्युज्यते। तस्मान्निगमागमानां वैखरीवाग्रूपाणां सूक्ष्मवाग्रूपेण परशिवब्रह्मणि सृष्टेः प्रागपि सत्त्वान्नित्यत्वं सिद्धम्, "चत्वारि वाक्परिमिता पदानि ···। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति।।" इति श्रुतेः, अङ्कुरायमाणाङ्कुरितपल्लवितफलितरूपसूक्ष्मा-पश्यन्ती-मध्यमा-वैखर्यपरपर्यायारम्भविवक्षाध्यवसायोक्तिरूपासु चतुर्विधासु वाक्षु चतुर्मुखं प्रति वेदशब्दजालमुपदेष्टुः परमेश्वरस्योक्तेः, कण्ठदेशे फलितरूपाया उन्मेषक्रमवैलोम्येन हृदये पल्लविताध्यवसायोक्तिरूपत्वात् तस्याः, नाभावङ्कुरिताविवक्षावाक्स्वरूपत्वात् तस्याः, आधारेऽङ्कुरायमाणारम्भवागात्मकत्वात् तस्या विमर्शशक्त्यात्मकत्वात् तस्याः शिवात्मकत्वान्न शिवव्यतिरिक्तत्वं वेदागमशास्त्रस्य।

कथमेतद्वैखरीवाग्रूपस्य निगमागमशास्त्रस्य बाह्यश्रोत्रेन्द्रियग्राह्यस्य विमर्शशक्तिरूपत्वमिति? शब्दप्रपञ्चस्य आकाशधर्मत्वेनाकाशात्मकत्वेन विमर्शशक्तिरूपचिदाकाशात्मकत्वाभावात्, इति चेदुच्यते — आकाशस्यापि शब्दगुणविशिष्टस्य सृज्यकोटिप्रविष्टत्वात्, "आत्मन आकाशः संभूतः" इति, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी।।" इति च श्रुतेः शब्दगुणकस्याकाशस्य चिच्छक्तिविशिष्टपरमात्मोपादानकारणकत्वात्, शक्तिशक्तिविशिष्टयोरभेदात् सिद्ध्यत्येव विमर्शशक्त्यात्मकत्वम्। परमात्मनः शिवस्यैव संविच्चिच्छक्तिः प्राणद्वारेण वाग्रूपतामादधाना निगमागमरूपा भवति। तदुक्तम् —
"स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा। वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना।
केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी। प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते।।
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा। स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी।।"
इति। तस्मात् शास्त्रैकसमधिगम्यत्वं महेश्वरस्येति सिद्धम्। स्वाव्यतिरिक्तप्रमाणगम्यत्वान्न जडत्वापत्तिः शिवस्य। अत एव श्रुतिरपि — "नावेदविन्मनुते तं बृहन्तम्" इति वदति स्वाभिन्नवेदव्यतिरिक्तप्रमाणागम्यत्वम्।

परस्तु वेदादिशब्दप्रपञ्चस्यार्थप्रपञ्चस्य च चैतन्यात्मतातिरिक्तत्वं वदति। तन्मते परब्रह्मणः शास्त्रयोनित्वाधिकरणानुरोधेन शास्त्रवेद्यत्वे घटादिवज्जडत्वापत्तिरनिवार्यैव

स्यात्, स्याच्च स्वप्रकाशताभङ्गोऽपि। वेदान्तशास्त्रेणापि प्रमाणेनावगम्यत्वे एतदधिकरणस्य वैयर्थ्यं च भवेत्।

ननूक्तं ब्रह्मात्मैक्यज्ञानानन्तरं तस्याप्रामाण्यमित्यतो नैतदधिकरणविरोध इति चेन्न, कृतघ्नतापत्तेः। यदनुग्रहबलाज्ज्ञानं ततः सांसारिकदुःखमुक्तिः परमानन्दप्राप्तिस्तस्याप्यप्रामाण्यमिति तत्तुच्छमिति तन्मिथ्येति हेयमिति निन्दतः कृतघ्नताकथनव्यतिरेकेण किं वक्तव्यम्। विधिनिषेधबोधकशास्त्रस्याप्यसत्यत्वे सत्कर्मानुष्ठानोच्छेदप्रसक्त्या बौद्धचार्वाकादिनास्तिकमतप्रवेशापत्तेश्च।

यस्तु देहात्मप्रत्ययस्य प्रामाण्यं मन्यते, स सदैव तस्य प्रामाण्यमेव मन्यते। नहि कञ्चित्कालं प्रमाणं कञ्चित्कालमप्रमाणमिति। नहि "भस्मीभूतस्य देहस्य पुनरागमनं कुतः। तस्मात्सर्वप्रयत्नेन ऋणं कृत्वा घृतं पिबेत्।।" इत्याचक्षाणं लोकायतिकमन्तरेण कोऽपि देहात्मप्रत्ययस्य प्रामाण्यं मन्यते। नहि बालकादयोऽपि मम शरीरमिति वदन्तस्तस्य प्रामाण्यं मन्यन्ते। तस्मात्तत् सदैवाप्रमाणम्। यत्प्रमाणं तत्सदैव प्रमाणमेव भवितुमर्हति। घटादिदर्शने चक्षुरादिवत्। येषां रागद्वेषादयः, तेषां तु वचनमप्रमाणमपि भवति। निर्धूतसमस्तरागद्वेषादिदोषकलङ्कस्य सर्वज्ञत्वादिषडङ्गस्य अवाप्तसकलकामस्य परमाप्तस्य शुद्धचिद्रूपस्य परशिवस्य ब्रह्माद्यनुग्रहार्थं धृतलीलाविग्रहस्य वचनं तु सर्वदैव प्रमाणमेव। तस्मान्नामरूपात्मकप्रपञ्चस्यापि परशिवोपादानात्मकत्वात्तदात्मकत्वात् "चैतन्यमात्मा" इति शिवसूत्रस्थितेः। अत्र विशेषाचोदनात् सर्वस्यापि चैतन्यात्मकत्वस्योक्तत्वात् ब्रह्मसूत्रशिवसूत्रयोरेकार्थकत्वस्याप्युपपन्नत्वात्। श्रुतयोऽपि — "सर्वं खल्विदं ब्रह्म", "सर्वो ह्येष रुद्रः", "आत्मैवेदं जगत्सर्वम्" इत्याद्याः सर्वस्यापि विश्वस्य ब्रह्मोपादानकत्वाद् ब्रह्मात्मकत्वं सत्यत्वं ब्रुवते। "आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी" इत्यादिश्रुतेः।

अयमस्यार्थः — आत्मनः =अङ्कुरोन्मुखचणकादिवत् सृष्ट्युन्मुखस्य महालिङ्गस्य अभिन्नादात्मरूपचिच्छक्तिरूपादङ्गात् प्रणवमयाद् आकाशः शरणापरपर्यायसदाशिवाङ्गमुद्भूतः=आविर्भूतम्, आकाशं तदभिमानिशरणस्थलमुदभूदित्यर्थः। आकाशाद् आकाशाङ्गात्सदाशिवाद् वायुः प्राणलिङ्गापरपर्यायेश्वराङ्गं संभूतः=उत्पन्नम्। वायुरूपाङ्गतदभिमानिप्राणलिङ्गस्थलम् आविर्भूतमित्यर्थः। वायोर्वाय्वङ्गादीश्वराद् अग्निः प्रसाद्यपरपर्यायं रुद्राङ्गं संभूतः=उन्मिषितम्। अग्नेः अग्न्यङ्गाद् रुद्राद् आपो विष्णवपरपर्यायं महेशाङ्गम्। अद्भ्यो महेशाङ्गाद् जलात् पृथिवी=भूम्यङ्गं चतुर्मुखापरपर्यायं भक्ताङ्गं संभूतं च। तथा च आकाशादिपृथिव्यन्तार्थतदभिमानिसदाशिवादिस्थलाविर्भावस्य परशिवमहालिङ्गा-

भिन्नात्मरूपचिच्छक्तिकृतत्वाद् आकाशादिसर्वजडाजडप्रपञ्चस्य शक्त्यात्मकत्वात् शक्तिशक्तमतोरभेदात् शिवस्य जगन्मयत्वं सिद्धम्, "शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते। शक्तयश्च जगत्सर्वं शक्तिमांश्च महेश्वरः।।" इत्यागमोक्तेः। तथैवागस्त्यं प्रति रेणुकभगवत्पादा अप्युपदिशन्ति — "यस्मादेतत्समुत्पन्नं महादेवाच्चराचरम्। तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः।। शिवतत्त्वात्समुत्पन्नं जगदेतन्न भिद्यते। फेनोर्मिबुद्बुदाकारं यथा सिन्धोर्न भिद्यते।। यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः। तथा शिवात्समुत्पन्नं शिव एव चराचरम्।। आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः। कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात्।। पत्रशाखादिरूपेण यथा तिष्ठति पादपः। तथा भूम्यादिरूपेण शिव एको विराजते।।" इति।

तथा च सर्वस्यापि प्रपञ्चस्य परशिवब्रह्मोपादानकारणत्वात् तन्मयत्वान्निगमागम-रूपस्यापि तन्मयत्वम्। तच्चिच्छक्तिकृतत्वाच्चिच्छक्तेः स्वानतिरिक्तत्वान्निगमागमैकगम्यत्वं ब्रह्मणः। किमिदमुच्यते निगमागमगम्यत्वमिति? शास्त्रपदस्य वेदान्तमात्रवृत्तित्वात्। ब्रह्मसूत्राणां सर्वेषां वेदान्तार्थनिश्चायकत्वात्, आगमार्थनिर्णये सूत्रकर्तुस्तात्पर्याभावान्न "शास्त्रयोनित्वात्" इत्यत्र शास्त्रपदाभिधेयत्वं शिवागमस्यापीति चेदुच्यते — सिद्धान्त-संज्ञितागमनिगमयोरेकार्थकत्वाद् एककर्तृकत्वाच्च तयोः प्रामाण्यसाम्याद् ब्रह्मसूत्राणां न केवलं वेदान्तार्थनिर्णायकत्वम्, किन्तु तदभिन्नागमार्थस्यापि, "आगमेषु पदार्था ये त एव व्याससूत्रके" इति कारिकाकारैरुक्तत्वात्। यदि शास्त्रपदाभिधेयत्वं वेदान्तानामेवेति तात्पर्यम्, तर्हि "वेदान्तयोनित्वात्" इत्येव सूत्रं किमर्थं न रचितवान् सूत्रकारः? तस्माच्छास्त्रपदेनागमस्यापि बोधो भवत्वित्याशयेन "शास्त्रयोनित्वात्" इति सूत्रयामास भगवानाचार्य इति तस्य तात्पर्यं वर्णयितुं शक्यत्वात् शास्त्रपदाभिधेयनिगमागममात्रगम्यत्वं ब्रह्मणः, न त्वनुमानादिस्वव्यतिरिक्तप्रमाणगम्यत्वम्।

तदुक्तं स्कान्दे — "अतीन्द्रियार्थविज्ञाने मानं नः श्रुतिरेव हि। श्रुत्यैव गम्ये सूक्ष्मार्थे स तर्कः किं करिष्यति।। मानानुग्राहकस्तर्को न स्वतन्त्रः कदाचन। श्रुतिः सनातनी शम्भोरभिव्यक्ता न संशयः।। शङ्करेण प्रणीतेति प्रवदन्त्यपरे जनाः। यथा सा शङ्करप्रोक्ता तथापि श्रुतिरास्तिका।। प्रमाणं सुतरामाप्ततम एव महेश्वरः। सर्वदोषविहीनस्य महाकारुणिकस्य च।। सर्वज्ञस्यैव रुद्रस्य कथं दोषः प्रयुज्यते। अथ पक्षद्वयेनापि वेदो मानं न संशयः।।" पौष्करपारमेश्वरेऽपि — "यथा सा शङ्करेणोक्ता तथापि श्रुतिरास्तिका। प्रमाणं सुतरामाप्ततम एव महेश्वरः।। सुप्रसन्नेन्द्रियग्रामः सर्वज्ञः सर्वगोचरः। पक्षपातविनिर्मुक्तो यथार्थग्राहकः

सदा।। अव्ययः परिपूर्णश्च स्वतन्त्रः पशुपाशहा। प्रमाणमेकं तद्वाक्यं तथ्यं श्रेयस्करं सदा।।'' इति।

तस्मात् श्रुत्यागमशब्दितशास्त्रस्यैव परशिवब्रह्मप्रकाशनक्षमत्वमङ्गीकर्तुं शास्त्रस्य शास्तुरनतिरिक्तत्वान्न स्वस्वप्रकाशताभङ्गोऽपि। यदि शास्त्रस्य जगत्कारणत्वादितन्माहात्म्य-प्रकाशनक्षमत्वरूपं प्रामाण्यं नाङ्गीक्रियते, तदा ब्रह्मात्म्यैक्यज्ञानाभावादनिर्मोक्षप्रसङ्गः। मोक्षं प्रति ज्ञानसमुच्चितकर्मणः कारणत्वात्, तस्य चित्तशुद्धेर्हेयोपादेयविचारजन्यत्वात्, तद्विचारस्य शास्त्रजन्यत्वात्, शास्त्रस्य गुरूपसदनपूर्वकलिङ्गधारणात्मकपाशुपतदीक्षा-संस्कृतेनैव दीयमानत्वात्, गुरुं विना दीक्षाभावात्तदभावेऽध्ययनाधिकाराभावात्। अत एव "गुरुरुपायः'' इति सूत्रितत्वात् शास्त्रस्यैव प्रामाण्यं जगत्कारणत्वादिमाहात्म्यप्रकाशने ब्रह्मणः। तदुक्तमागमरहस्यस्तोत्रे — "साक्षाद्भवान् यदि विधाय न मूर्तिमाद्यां तत्त्वं निजं तदवदिष्यदतोऽतिगुह्यम्। नाज्ञास्यत त्रिभुवनं ध्रुवमन्धकल्पं [ नूनं ] समस्तमसम-ञ्जसतामयास्यत्।।'' इति। उक्तं च षाड्गुण्यविवेके — "साक्षात् त्वमेव वा शास्त्रं त्वदीयैव च सा मतिः। शब्दद्वारेण संक्रम्य सस्करोत्यधिकारिणः।।'' इति।

उक्तं चान्यत्र — "यद्वत् सोपानेन प्रासादमारोहेत् प्लवेन वा नदीं तरेत् तद्वच्छास्त्रेणैव भगवान् शास्ता अवगन्तव्यः'' इति, शास्त्रस्य वेदागमरूपस्य शास्तुः परशिव-ब्रह्मणोऽनतिरिक्तत्वात्, तदुपादानकत्वाद् वाच्यस्य, वाचकस्यापि प्रपञ्चस्य शिवमयत्वात् शास्त्रेणैव परशिवो भगवानवगन्तव्य इत्यर्थः, निगमागमशास्त्रस्य विमर्शशक्तिरूपेण सृष्टेः प्राक् परशिवब्रह्मणि स्थितत्वात् तदभिन्नत्वात्। तदुक्तं पूर्वाचार्यैः — "अनादिः स शिवो मुख्यो यथान्येभ्यो विलक्षणः। तथा तद्वदनोद्गीर्णा वाचोऽन्येभ्यो विलक्षणाः। शिवागमाश्च वेदाश्च नित्या एव प्रमाणतः। नित्याः शिवागमा वै ये शिवेनादावभेदतः। नित्यस्थितास्त्वभिव्यक्तास्तस्मिंस्तेऽनादयो यतः।।'' इति।

इत्थं च जगज्जन्मादिकारणब्रह्मणः शास्त्रवेद्यत्वात्, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'', "यद्वाचानभ्युदितम्'', "यन्मनसा न मनुते'' इत्यादीनां श्रुतीनां ब्रह्मानन्दस्येयत्तापरिच्छेदाभावेनापरिमेयत्वप्रतिपादनपरत्वात्। अन्यथा "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन'', "मनसैवानुद्रष्टव्यम्'', "भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्। कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम्।।'' इत्यादिशास्त्रविरोधात्। तादृशस्यापरिमेयस्यानन्दस्य मनसा यो विजानाति स न बिभेति कुतश्चनेति शास्त्रनिर्णीतार्थस्य ब्रह्मणो मनसा वेद्यत्वस्य प्रतिपादितत्वात्। तादृशानन्दानुभवितुरात्मनोऽपि मनसो पराहन्तामयचिच्छक्त्यात्मकत्वाद् लिङ्गाङ्गसामरस्यज्ञानदार्ढ्यापसृते चित्तस्य सङ्कोचे तस्यैव

चितिरूपत्वात् तस्या अपरिमेयत्वादपरिमेयानन्दानुभविता भवत्येवात्मा, शिवयोगाभ्याससञ्जनितदृढतरलिङ्गाङ्गसामरस्यज्ञानिनः सर्वकामनानदीनां परशिवसमुद्रे प्रविष्टत्वात्, तस्य मुक्तत्वात्, तस्य चित्तस्य पिण्डितमयस्य पात्रीकृतत्वात्, तदवलम्बनेन संतीर्णसंसारसागरत्वात्। तदुक्तं कृष्णगीतायाम् — "आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्। तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्रोति न कामकामी।।" इति। जलकरकवत्, घृतकाठिन्यवत्, ज्ञानक्रियाशक्तिगर्भेच्छाशक्तेरेव ···· या परिणता सती (?) सत्त्वरजस्तमोरूपचित्तरूपेण परिणतत्वात्। तस्य लिङ्गाङ्गसामरस्यबोधककरसमुदितस्वस्वभावभक्तित्वान्न "यतो वाचो निवर्तन्ते", "यन्मनसा न मनुते" इत्यादिना शास्त्रजन्यशुद्धमनोवृत्त्यविषयत्वं ब्रह्मणः, वाङ्मनसातिरिक्तमानगम्यत्वाभावात्, ब्रह्मणि मानान्तराप्रवृत्तेः, "नावेदविन्मनुते तं बृहन्तम्" इति श्रुतेः, "मनसैवानुद्रष्टव्यम्" इति च श्रुतेः। निगमागमशास्त्रस्य स्वविमर्शशक्तिरूपेण स्वाभिन्नत्वात् शास्त्रप्रमाणकत्वात् सर्वार्थावभासकशास्त्रनिर्मातुः सर्वज्ञत्वमपि सिद्ध्यत्येव।

ननु शास्त्रोक्तसकलपदार्थाभिज्ञत्वं सर्वज्ञत्वम्। तच्च शास्त्रप्रवर्तकेष्वपि दृष्टत्वात् कथं शिवस्यैवेति चेन्न, निगमागमशास्त्रप्रवर्तकानां मुक्तत्वात् शिवात्मकत्वात् शिवसृष्टरुद्रगणान्तर्गताचार्यगणस्य निगमागमशास्त्रप्रवर्तकत्वेऽप्यन्यूनं सर्वज्ञत्वं वक्तव्यम्, तस्य शिवव्यूहरूपत्वात् सद्योजातादिपञ्चमुखाविर्भूतत्वात् तदात्मकत्वात्, "अर्धनारीश्वरत्वादिलीला विभवसंज्ञिकाः। सद्योजातादयः पञ्च व्यूहा प्रोक्ताः सनातनाः।।" इत्यागमोक्तेः, सौभर्यादियोगिनां व्यूहस्य तदनतिरिक्तत्वात्। शिवव्यूहरूपस्य रेणुकादिपञ्चाचार्यगणस्य शिवानतिरिक्तत्वात्, "स वा एष पुरुषः पञ्चधा" इति श्रुते रेणुकादिपञ्चाचार्याणां सर्वज्ञत्वस्य शिवसर्वज्ञत्वावैशेष्यात्। तदुक्तं सिद्धान्तशिखामणौ — "इत्येवं प्रार्थितः शम्भुर्ब्रह्मणा विश्वयोनिना। ससर्जात्मसमप्रख्यान् सर्वगान् सर्वशक्तिकान्।। प्रबोधपरमानन्दपरिवाहितमानसान्। प्रमथान् विश्वनिर्माणप्रलयापादनक्षमान्।। तेषु प्रमथवर्गेषु सृष्टेषु परमात्मना। रेणुको दारुकश्चेति द्वावभूतां शिवप्रियौ।।" इति। उक्तं चादित्यपुराणे — "प्रजाः सृजेति निर्दिष्टश्चन्द्रमौलिर्विरिञ्चिना। ससर्ज मनसा रुद्रानात्मतुल्यान्महेश्वरान्।। नीलकण्ठांस्त्रिनेत्रांश्च जटामुकुटमण्डितान्।" इति। तत्र शास्त्रप्रवर्तकत्वेऽप्याचार्यगणस्य रेणुकादेर्नब्रह्मसृष्टशास्त्रप्रवर्तकोपमन्युदुर्वासो-दधीचिगौतमादिवच्छास्त्रप्रणेतुः सर्वज्ञत्वादपकृष्टं सर्वज्ञत्वम्।

एतेन श्रीकरभाष्ये — "ननु सर्ववेदवेदान्तोक्तसकलपदार्थाभिज्ञत्वं सर्वज्ञत्वं तदुपमन्युदधीचि-गौतम-दुर्वासो-रेणुक-दारुक-शङ्कुकर्ण-गोकर्णादीनामपि दर्शनात् कथं

परमेश्वरस्यैकस्यैवेति चेन्न, परमेश्वरोपासनावशात् तत्कृपालब्धयत्किञ्चित्सर्वज्ञत्वस्य तेषां सत्त्वान्न विरोधः। खद्योत-प्रभाकरयोस्तेजस्त्वेनैकत्वेऽपि प्रकाशवैलक्षण्यात् सर्ववस्त्ववभासकश्रुतीनां परमेश्वरकर्तृतया तस्यैव सर्वाधिकज्ञानमुपपद्यते, शास्त्रप्रवर्तकापेक्षया शास्त्रप्रणेतृणां विशेषज्ञानदर्शनात्। किञ्च, सकलजगद्व्यापकत्वेन सर्वान्तर्यामित्वेन सर्वज्ञत्वं नान्येषां संभवति, सर्वज्ञत्वादिषड्विधर्माणामनन्यसाधारणत्वात्'' इत्युक्तं निरस्तम्, रेणुकदारुकादीनां यत्किञ्चित्सर्वज्ञत्वमिति यत् शिवसृष्टानां प्रमथानां सर्वान्तर्यामित्वात् सर्वशक्तिकत्वात् तत्राप्याचार्यगणस्य शिवव्यूहात्मकत्वात्, नित्य-मुक्तत्वात्, शिवस्यैव भक्तोपासनार्थं गुरुलिङ्गजङ्गमरूपेण त्रिधा विभक्तत्वात्, रेणुकाद्याचार्यपञ्चकस्य गुरुरूपत्वात्, जङ्गमात्मकत्वात्, मुक्तात्मनां सर्वज्ञत्वादिशक्तीनां विकासे रेणुकादिनित्यमुक्तात्मनां सर्वज्ञत्वादिमत्त्वस्य कैमुतिकन्यायसिद्धत्वात्, मुक्तात्मनां परशिवब्रह्मणः किञ्चिदपकर्षे संसारित्वापत्तेः, ''अनादिशिवात् कथञ्चिद् अपकर्षे वा मुक्तशिवाः संसारिण एव स्युः'' इत्युक्तत्वात् शिवसूत्रविमर्शिन्याम्। तस्मादुप-मन्युदधीचिगौतमादिवद् रेणुकदारुकादिभगवत्पादानां खद्योतसादृश्यं यत्किञ्चित्सर्वज्ञत्वमुक्तं शक्तिपातपवित्रितबुद्धिविलसितमिति ध्येयम्।

क्रियासारे नन्दिकेश्वरादिद्वारपालेष्वपि शिवाभेदबुद्धेः कार्यत्वे उक्ते रेणुकाद्याचार्यगणे शिवाभेदबुद्धेः कर्तव्यताकत्वात् श्रीकरभाष्यकारस्य भगवत्पादेषु रेणुकादिषु शिवाभेद-बुद्धेरनुपजातत्वे गणगोत्राजन्यत्वं निमित्तमथवा शिवागमापरिशीलनं च निमित्तमुन्नेयम्। अत एव तेनोपमन्युगौतमादिमहर्षिसाम्यमुक्तम्। यत्किञ्चित्सर्वज्ञत्वेन तच्छिष्यकोटि-प्रविष्टानामुपमन्युदधीचिदुर्वासादीनामिव नैव युक्तं किञ्चिज्ज्ञत्वं वक्तुम्। रेणुकादीना-मप्राकृतमन्त्रतनुत्वाद् उपमन्युदधीच्यादीनां प्राकृततनुत्वात् तेषां शिवदीक्षावशाद् मन्त्रपिण्डस्य भावनामात्रगम्यत्वान्न वस्तुतो मन्त्रमयत्वम्, रेणुकादीनां गुरुरूपत्वेन शिवात्मकत्वात्, उपमन्युप्रमुखानां ऋषीणां शिष्यरूपत्वेन जीवात्मकत्वात्। तदुक्तं क्रियासारे — ''गुणातीतः परशिवो गुरुरूपमुपाश्रितः। गुणान् रुन्धे इति प्रोक्तो गुरुशब्दस्य विग्रहः।। सविकारान् राजसादीन् गुणान् रुन्धे व्यपोहति। गुणत्रयं व्यपोह्याग्रे शिवं बोधयतीति सः।। विश्वस्तितां तु गुरुरित्यभिधीयते।। इति। ''तस्मात्तस्माच्च गिरिजे! पञ्चाननसमुद्भवाः। मदादिसर्वलोकानां जगद्गुरुवरोत्तमाः।।'' इत्यागमोक्तेः। उपमन्यु-दधीचि-दुर्वास-अगस्त्य-सानन्द-व्यास-कश्यप-हरकण्ठ-गौतमादयः पञ्चाचार्यशिष्या इत्येतदपि पाशुपततन्त्र-काशीखण्ड-श्रीशैलखण्डादिग्रन्थेषु प्रसिद्धमेव।

एते च रेणुकादयः पञ्चाचार्याः श्रीकरभाष्यकारेण उपमन्युप्रमुखऋषिपङ्क्तिनिक्षिप्ता ये सन्ति त एव द्वापराचार्याः, ''द्वापरे रेणुकश्चेति दारुकश्च द्वितीयकः। तृतीयः शङ्कुकर्णश्च

चतुर्थो धेनुकर्णकः। पञ्चमो विश्वकर्णाख्यः पञ्च नामानि वै शृणु।।'' इति पाशुपततन्त्रोक्तेः। एतेषां च सद्योजातादिपञ्चमुखाविर्भूतत्वान्नित्यमुक्तत्वाच्च नित्यमुक्तशिवात्मकत्वात् स्वतन्त्रत्वान्नहि परशिवब्रह्मणः कथञ्चिदपकर्षो वक्तुं शक्यते, येन यथाकथञ्चित् यत्किञ्चित् सर्वज्ञत्वमुच्येत, ''यस्मान्मन्मुखसंजाताः स्वतन्त्राश्चेति विश्रुताः'' इत्यागमोक्तेः।

किञ्च, किं नाम यत्किञ्चित्सर्वज्ञत्वं सर्वज्ञपरशिवब्रह्मनिष्ठात् सर्वज्ञत्वाद् भिन्नं वा अभिन्नं वा? आद्ये शास्त्रप्रवर्तकानां (तेषां?) मेषपालादिसाम्यप्रसङ्गः, तेष्वपि तत्सत्त्वात्। द्वितीये तेषां सर्वज्ञादविशेषप्रसङ्गः। यदि निगमागमशास्त्रजन्यज्ञानवत्त्वं यत्किञ्चित्सर्वज्ञत्वम्; तत्रापि शास्त्रप्रणेतुः शिवज्ञानात्तज्ज्ञानमपकृष्टं वा अभिन्नं वा? यद्यपकृष्टं तदा कथं शास्त्रप्रवर्तकत्वम्, स्वेषामेव साकल्येन शास्त्रज्ञानाभावात् कथमन्यान् प्रवर्तयन्ति। यदि शास्त्ररचयित्रैव साकल्येन स्वस्वरूपं नोपदिष्टम्, तर्हि शास्त्रजिज्ञासयापि साकल्येन स्वरूपज्ञानाभावान्मोक्षाभावप्रसङ्गः। तस्माच्छास्त्रस्य निगमागमरूपस्य प्रणेतुस्तद्विषयस्य च परशिवब्रह्मणः पाणिन्यादिसादृश्यमयुक्तमेव। यद्यभिन्नं तदा सर्वज्ञशिवादविशेषप्रसङ्गः। इष्टापत्तौ 'ननु' इत्यादिना शङ्कोत्थापनं व्यर्थम्। यदि शास्त्रप्रवर्तका उपमन्यु-सानन्द-कश्यप-हरकण्ठ-व्यासागस्त्य-दुर्वासदधीचि-गौतमादयः स्वयं बद्धाः कथमन्यान् मोचयन्ति, ''किं शिला तारयेच्छिलाम्'', यदि ते मुक्ताः, तेषु शिवाभिन्नेषु शिवनिष्ठं सर्वज्ञत्वं कथं न तिष्ठति। मुक्तात्मनां नद्या अब्धाविव परशिवब्रह्मसामरस्याभावे तदपकर्षे वा संसारित्वापत्तेरुक्तत्वान्न द्वैतं वक्तुं शक्यते मुक्तात्मनाम्। वेदान्तकामिकाद्यागमशास्त्रप्रवर्तका बद्धा यदि भवेयुस्तदा परशिवभिन्नेषु तेषु सर्वज्ञत्वशङ्का संभवेत्। तस्माच्छास्त्रप्रवर्तकेषु यत्किञ्चित्सर्वज्ञत्वमुक्तं बालिशभाषितमेव। तत्रापि नित्यमुक्तेषु रेणुकदारुकादिभगवत्पादेषु तदुक्तमतिसाहसमेव। किञ्च, ''खद्योत-प्रभाकरयोस्तेजस्त्वेनैकत्वेऽपि प्रकाशवैलक्षण्यात्'' इत्युक्तमप्ययुक्तमेव, तयोरेकत्वाभावात्, खद्योतस्य तेजस्त्वाभावात्, तस्य पार्थिवत्वात्, अन्यथा बिडालनेत्रस्थिततेजस्त्वेन प्रभाकरबिडालयोरेकत्वापत्तेः। तस्मात् खद्योतस्य तेजस्त्वप्रतिपादनमनाघ्राततर्कादिशास्त्र-ग्रन्थस्य श्रीकरभाष्यकारस्य भूषणमेव।

न च मुक्तात्मनां शास्त्रार्थज्ञानवत्त्वेऽपि न ब्रह्मगतसर्वज्ञत्वम्, तस्य शास्त्रार्थादधिका-र्थज्ञानवत्त्वात्। तथाहि— ''वेदः स्वार्थादधिकार्थज्ञानवज्जन्यः, वाक्यप्रमाणत्वात्, पाणिन्यादिवाक्यवत्'' इत्यनुमानेन शास्त्रजिज्ञासादिना शास्त्रार्थज्ञानवत्त्वाद् मुक्तात्मनां न शास्त्रकर्तुर्ब्रह्मणः सर्वज्ञत्वमिति वाच्यम्, शास्त्रकर्तुर्ब्रह्मणोऽपि शास्त्रप्रतिपाद्यत्वात् तदर्थत्वात्, वेदे वाक्यप्रमाणत्वहेतोः सत्त्वेऽपि साध्याभावात् बाधितत्वात्। यदि

वेदकर्तुर्ब्रह्मणो वेदार्थता, कथं वेदः स्वार्थादधिकार्थज्ञानवज्जन्य इत्युच्यते? यदि तस्य सा न भवेत्, कथं वा शास्त्रयोनित्वाधिकरणमुपपद्यते, ब्रह्मणः शास्त्रार्थत्वाभावात्। यदि शब्दार्थमयजगज्जन्मादिकर्तरि ब्रह्मणि वेदादिशास्त्रप्रमाणकत्वं नास्ति, केन वा प्रमाणेन तत्सिद्धिर्भवति। यदि किमपि प्रमाणं न स्यात्तदा शास्त्रैकप्रमाणकत्वं किमर्थं सूत्रितम्? "शास्त्रयोनित्वात्" इति।

तस्माच्छास्त्रकर्तुरपि शास्त्रार्थत्वात् तद्गतसर्वज्ञत्वस्यापि शास्त्रप्रतिपाद्यत्वात्, शास्त्रश्रवणादिना मुक्तात्मनां सर्वज्ञत्वप्राप्तिर्भवत्येवेति ध्येयम्। एतेन "यद्यद्विस्तरार्थं शास्त्रम्" इत्यादिनोक्तं शाङ्करभाष्यकारेण, तदपि निरस्तमित्यवगन्तव्यम्।

यत्तूक्तम् — "अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिः, इति चेन्न, अविद्याकल्पित-भेदनिवृत्तिपरत्वाच्छास्त्रस्य। नहि शास्त्रमिदं तथा विषयभूतं ब्रह्म प्रतिपिपादयिषति" इति, तन्न, यस्य ज्ञानान्मुक्तिस्तस्य ब्रह्मणः शास्त्रविषयत्वाभावे कथं शास्त्रं तज्ज्ञानमुत्पादयति, स्वस्मिन्नविद्यमानत्वात्। श्रोता वा कथं शास्त्रेऽविद्यमानं ब्रह्म जानाति। नहि सांख्यादितत्तच्छास्त्राविषयं तत्तदध्येता जानाति। तस्माद् वेदान्तशास्त्रस्य विषयत्वाभावे ब्रह्मणो ज्ञानाभावाद् मोक्षाभावप्रसङ्गात्। इदमिति परिच्छिन्नतया ब्रह्मणः प्रतिपादकत्वाभावेऽप्यपरिच्छिन्नतया ब्रह्म प्रतिपादयत्येव शास्त्रम्। तथा च शास्त्रम् — "सत्यं ज्ञानमनन्तं ब्रह्म", "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म। तद्विजिज्ञासस्व" इति। तस्माच्छास्त्राविषयत्वप्रतिपादनं ब्रह्मणः शास्त्रयोनित्वाधिकरणविरुद्धम्। नहि "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्।।" इत्यादिशास्त्रं ब्रह्मणः शास्त्राविषयत्वे प्रमाणम्, अन्यथा अग्रिम "प्रतिबोधविदितं मतममृतत्वं हि विन्दते। आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्।।" इति शास्त्रविरोधापत्तेः, अज्ञानसुषुप्त्यपगमानन्तरभाविनः प्रतिबोधस्य शिवाद्वैतज्ञानस्य "अहं ब्रह्मास्मि" इत्यादिशास्त्रजन्यस्य विषयताया ब्रह्मणि प्रतिपादनात्। कथमन्यथा प्रतिबोधविदितत्वं ब्रह्मणि संभवति। तस्मात् "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्।।" इत्यस्य शिवाद्वैतज्ञानिनः सर्वज्ञत्वप्रतिपादनपरत्वात्। येन संसारिणा अमतं दूरव्यवहितविप्रकृष्टादिकं सर्वमपि तेनैव शिवाद्वैतज्ञानानन्तरम् असंसारिणा मतं विज्ञातं भवति, "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति श्रुतेः। "यस्यामतं" इत्यस्य "प्रतिबोधविदितम्" इत्यस्य चार्थं केनोपनिषदो व्याख्यायामेव विस्तरतो निरूपयिष्यामः। तथा च विधिवद्गुरूपसदनसमुदितदीक्षालक्षणगुरुकारुण्यस्थलसम्पन्नस्योपमन्यु-

दधीचिदुर्वासागस्त्यप्रमुखमहर्षिगणस्य ब्रह्मज्ञानित्वप्रयुक्तसर्वज्ञत्वस्य श्रुतिसिद्धत्वे किमु वक्तव्यं तद्गुरूणां रेणुक-दारुक-शङ्कुकर्ण-धेनुकर्ण-विश्वकर्णाख्यानां पञ्चाचार्याणां सद्योजातादिपञ्चमुखाविर्भूतानामिह सोमेश्वरादिपञ्चलिङ्गगर्भाविर्भूतानामयोनिजानां नित्यमुक्तानां गणनायकानां शिवव्यूहानां शिवसर्वज्ञत्वाभिन्नसर्वज्ञत्वमस्तीति।

तथा च मुक्तात्मनां सर्वलोकेषु कामचारत्वं ब्रवीति श्रुतिः — "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति। तेषां सर्वज्ञत्वमपि वदति श्रुतिः — "तदेष श्लोकः— न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः।।" इति। उक्तं च शिवधर्मोत्तरे — "दिनकृत्कोटिसंकाशं स्थानमाश्चर्यसंयुतम्। सर्वकामसमायुक्तं विशुद्धं नित्यमक्षयम्।। संप्राप्य तत्परं दिव्यमन्तःक्लेशविवर्जिताः। सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णा भवन्ति च।। विशुद्धकार्यकरणाः परमैश्वर्यसंयुताः। सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः।। संप्राप्ताये परं स्थानं ज्ञानयोगरता नराः। न तेषां पुनरावृत्तिर्घोरे संसारमण्डले।।" इत्यलम्, "सङ्कल्पादेव तु तच्छ्रुतेः" इत्यादिसूत्रवृत्तौ मुक्तेः स्वरूपस्य वक्ष्यमाणत्वात्।

तस्मान्न श्रीकरभाष्यकारोक्तं यत्किञ्चित्सर्वज्ञत्वं रेणुकभगवत्पादादीनामपि सोढुं शक्यते शास्त्रदृष्टिभिः शैवैः — "यैर्भेददृष्ट्या मर्त्यत्वं गुरोर्लिङ्गस्य चाश्मता। कल्पिता ज्ञाततत्त्वास्ते तत्त्वज्ञानपराङ्मुखाः।।" इति, "भेदकृत् पापमश्नुते" इति च गुरुपदवाच्यानां शिवभिन्नत्वकल्पने प्रत्यवायविधाने उक्ते क्रियासारे किमु वक्तव्यं परमगुरूणां रेणुकादिभगवत्पादानां किञ्चिज्ज्ञत्वप्रयुक्तमर्त्यत्वकल्पने। तस्मात् श्रीकरभाष्यकारः प्रत्यवायबद्धः सन् तत्फलं महद्दुःखमनुभवतु। सर्वज्ञत्वादिषडङ्गयोगसिद्धानां सायुज्य-मुक्तिलाभे सर्वज्ञत्वादिप्राप्तिर्भवति। तदुक्तं क्रियासारे तृतीयोपदेशे — "शिवस्यामानमैश्वर्यं तदा लब्धं भवेत् स्वतः। सार्वज्ञ्याद्यं शिवैश्वर्यं लब्ध्वा स्वात्मा विराजते।। तत्सायुज्यमिति प्राहुर्वेदागमपरायणाः। एवं क्रमेण मुक्तिः स्याल्लिङ्गादौ पूजया स्वतः।। अतः शिवप्रसादार्थं क्रियाद्यैः पूजयेच्छिवम्। शिवक्रिया शिवतपः शिवमन्त्रजपः सदा।। शिवज्ञानं शिवध्यानमुत्तरोत्तरमभ्यसन्। आसुप्तेरामृतेः कालं नयेद्वै शिवचिन्तया।।" इति।

तस्माद् व्यासादिशास्त्रप्रवर्तकानामदृष्टफलत्वे इतरेषां फलप्रदर्शकत्वाभावात् स्वयं तीर्णः परांस्तारयतीति न्यायाद् मुक्तत्वं वक्तव्यम्। तथा च मुक्ताः स्वसङ्कल्पानुसारेण किञ्चित्कालं तत्तल्लोकभोगानन्तरं शिवैक्यरूपं शिवसायुज्यं प्राप्नुवन्तीति सालोक्यादिचतुर्विधमुक्त्यभ्युपगच्छद्भिरङ्गीकरणीयमेव। किञ्च, केषाञ्चिन्मुक्तानां सर्वज्ञत्वादिशक्तिविकासो देहपातानन्तरम्, केषाञ्चित् कदाचिद् देहे स्थिते एवेत्यप्यङ्गी-

करणीयम्, कथमन्यथा विश्वामित्रस्य स्वर्गरचनासामर्थ्यम्, अगस्त्यस्य वा समुद्रपानसामर्थ्यमुपपद्यते। तदुक्तं क्रियासारे — "अगस्त्यः कुम्भजन्मापि शिवभक्त्यैव केवलम्। पपौ समुद्रमतुलं शिवशक्त्युपबृंहितः।।" इति। एवं च शास्त्रप्रवर्तकव्यासागस्त्यदूर्वासदधीचिप्रमुखेष्वपि मुक्तत्वप्रयुक्तसर्वज्ञत्वादिधर्माणां वक्तव्यत्वे किमु वक्तव्यं नित्यमुक्तानां तद्गुरूणां रेणुकभगवत्पादादीनां दृश्यादृश्यरूपेण स्थितानां सर्वशक्तिकानाम्। तस्माच्छ्रीकरभाष्यकारोक्तमनादरणीयं सर्वथा।

किञ्च, स्वोक्तिविरोधोऽपि भवत्येव। तथाहि स्वेनैव मङ्गलश्लोके भगवतो रेणुकस्यैव कलियुगे रेवणसिद्धाभिधानमादधानस्य मङ्गलश्लोकोक्तशिवतत्त्वोपदेशक-सदाशिवादिपारम्पर्यक्रमे च गुरुत्वस्योक्तत्वाच्च। नहि तात्त्विकार्थोपदेशकत्वाभावे गुरुत्वं संभवति। नहि तात्त्विकस्य शिवस्य साक्षात्काराभावे शिवत्वोपदेशकत्वं संभवति। न कश्चित् स्वयमदृष्टं दर्शयति किन्तु दृष्टं दर्शयति। तथा च सर्वात्मकशिवदर्शने सति कथं न सर्वं जानाति श्रीजगद्गुरुरेणुकशिवाचार्यः। यदि न जानाति, कथं वा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुतिः सङ्गच्छते। तस्माद्यत्किञ्चित्सर्वज्ञत्वोक्तं स्वोक्तिविरुद्धम्। किञ्च, विश्वगुरोर्दारुकस्यैव भगवत्पादस्य कलियुगे मरुळसिद्धाभिधानमादधानस्य वामदेवमुखोद्भूतस्यात्र सिद्धेश्वरलिङ्गजातस्य रेवणसिद्धसमशक्तिकस्य मङ्गलश्लोके शिष्यत्वद्योतकविशेषणं तु सिद्धान्तशास्त्रानवलोकनविलसितमेव, तत्र कुत्रापि रेवणसिद्धशिष्यो मरुळसिद्ध इत्युक्तेरभावात्। अस्तु, श्रीकरभाष्यविमर्शे विस्तरेणोच्यत एव।

किञ्च, रेणुकदारुकादिपञ्चाचार्येषु शास्त्रप्रवर्तकत्वेऽपि न यत्किञ्चित्सर्वज्ञत्वं वक्तुं शक्यते, व्यभिचारात्, शास्त्रकर्तरि शिवेऽपि चतुर्मुखादिशास्त्रप्रवर्तकत्वस्य सत्त्वात्, तस्य "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति" इत्यादि प्रमाणसिद्धत्वात्, "ब्रह्मा देवानां प्रथमः सम्बभूव" इत्यादिश्रुतिप्रतिपादिताथर्वादिशास्त्रप्रवर्तकानामुपदेष्टा खलु प्रथमं प्रथमोत्पन्नश्चतुर्मुखः। तस्योपदेशकगुरोरभावे कथं स्वयमनधीत्य अन्यानध्यापयति ब्रह्मविद्याम्। सर्वे जनिमन्तोऽपीहाचार्यकुलाद्वेदमधीयते, तदर्थं शृण्वन्ति, ततो युक्तिभिर्मन्यन्ते ध्यायन्ति धारयन्ति साक्षात्कुर्वन्ति च, न तु स्वयं तथा कुर्वन्ति। तस्माज्जनिमान् चतुर्मुखोऽप्यनाद्यनन्तात् पूर्वगुरोः परशिवब्रह्मणः सञ्जातः सन् तस्मादेव ब्रह्मविद्यां प्राप्य स्वयमग्रे उपदिदेशेति वक्तव्यत्वाच्छिवस्यापि शास्त्रकर्तुः शास्त्रप्रवर्तकत्वं सिद्धमेव। तस्मात् "शास्त्रप्रवर्तकत्वापेक्षया शास्त्रप्रणेतॄणां विशेषज्ञानदर्शनात्" इत्युक्तमप्ययुक्तमेव, शास्त्रप्रणेतॄणामपि शास्त्रप्रवर्तकत्वदर्शनात्। दृष्टं चैतल्लोके पतञ्जलिप्रभृतिषु। शास्त्रप्रणेतारः शास्त्रप्रवर्तयितारो न भवन्तीति नियमाभावात्। पशुवाङ्मनसोऽविषयत्वेऽप्यतद्व्यावृत्त्या परशिवब्रह्मणः "चिन्मात्रोऽहं सदाशिवः", "सत्यं ज्ञानमानन्दं ब्रह्म" इत्यादि-

सर्वात्मकशिवाद्वैतप्रतिपादकशास्त्रविषयत्वात् तच्छास्त्रश्रवणमननादिसञ्जनितपतिदशापन्नमुक्तमनोविषयत्वाच्छास्त्रमेव प्रमाणं जगत्सृष्ट्यादिकर्तरि परशिवब्रह्मणीति सिद्धम् ।।३।।

ननु शास्त्रस्य न प्रामाण्यम्, सिद्धवस्तुप्रतिपादकत्वेनाक्रियार्थत्वात्। तदुक्तम् — "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति। कर्तृदेवतादिसाधनपरत्वे त्वनुष्ठानोपयोगित्वेन सार्थक्यात्, अतो न सिद्धशिवलिङ्गपरत्वम्, वेदान्तेषु जीवप्रतिपादकवाक्यानां यागादिक्रियाकर्तृयजमानपरकत्वात्, ब्रह्मप्रतिपादकवाक्यानां देवतापरकत्वात् सृष्टिप्रतिपादकवाक्यानां द्रव्यादिसाधनपरकत्वाद् अनुष्ठानोपयोगित्वेन वेदान्तानां सार्थक्यम्। ब्रह्मपरकत्वे तदभावाद्वैयर्थ्यं स्यादित्यत आह —

## तत्तु समन्वयात् ।।४।।

अत्र तुशब्दः पूर्वपक्षनिराकरणार्थः। तच्छब्दः सर्वशक्तिजगदुत्पत्त्यादिकर्तृपरशिवलिङ्गे वर्तते। तद् ब्रह्म वेदान्तशास्त्रादवगम्यते, कुतः? "सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयं ब्रह्म, आत्मा वा इदमेक अग्र आसीत्, ऐतदात्म्यमिदं सर्वम्, तत् सत्यं स आत्मा, तत्त्वमसि" इत्यादीनां वाक्यानां समन्वयात् समनुगतत्वात्, भिन्नप्रकरणपठितत्वाच्च न कर्मोपयोगिकर्तृदेवतादिसाधनपरत्वं वेदान्तानाम्, ब्रह्मणः कर्मापेक्षितकर्तृत्वाद्यभावात्, अन्यथा श्रुतहान्यश्रुतकल्पनाप्रसक्तेः। न चानर्थक्यम्, हेयोपादेयरहितसिद्धवस्तुप्रतिपादकत्वादिति वाच्यम्, परमार्थमोक्षसाधनज्ञानविधिविषयत्वात्।

ननु ज्ञानस्य विधेयत्वे "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रोक्तधर्मलक्षणसद्भावाद् धर्मत्वं स्यात्। इष्टापत्तौ तत्साध्यमोक्षस्यानित्यत्वप्रसङ्गः, "तद्यथेह कर्मचित्तो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः, "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नात्स्यकृतः कृतेन" इति श्रुतेश्च कर्मफलस्य अनित्यत्वश्रवणादिति चेन्न, "अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्, ज्ञानविज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्" इत्यादिस्मृतेर्ज्ञानस्य धर्मरूपत्वेऽपि तत्साध्यस्य मोक्षस्य नानित्यत्वम्। "तद्यथेह कर्मचितः" इति वाक्यं त्वात्मभिन्नकेवलेष्टापूर्तादिकर्मफलप्रतिपादकत्वेन प्रमाणम्, तदनन्तरम् "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति विहितविद्ययाऽक्षय्यफलकत्वदर्शनात्। "नात्स्यकृतः कृतेन" इति वाक्यं तु विद्याभिन्नकर्मविषयकमेवेति बोध्यम्। अन्यथा "श्रोतव्यो निदिध्यासितव्यः", "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः", "ज्ञात्वा देवं मुच्यते सर्वपाशैः", "आत्मन्येवात्मानं

पश्येत्'', ''शम्भुराकाशमध्ये ध्येयः'' इत्यादिना उक्तध्यानविधेरनुपपत्तेः। तस्माद्वेदान्तेषु मोक्षफलाय ज्ञानस्य विधीयमानत्वात् तादृशज्ञानोपासनविषयाकाङ्क्षायामवान्तरवाक्येन ब्रह्मणोऽपि प्रतिपाद्यत्वं सिद्ध्यति विध्यनुप्रवेशमात्रेण। सिद्धवस्तुमात्रप्रतिपादकत्वे वेदान्तानामानर्थक्यं दुर्निवारं स्यात्।

ननु 'रज्जुरियं नायं सर्पः' इति वस्तुमात्रप्रतिपादनेऽपि सर्पभ्रान्तिनिवृत्त्या तत्कृतभयकम्पादिनिवृत्तिरूपप्रयोजनस्य दृष्टत्वात् तत्त्वज्ञानान्मिथ्याभिमाननिवृत्त्या तत्कृतसुखदुःखादेरपि निवृत्तिरूपप्रयोजनसम्भवान्नानर्थक्यमिति चेन्न, निश्चितात्मतत्त्वस्यापि यथापूर्वं दुःखाद्यनुभवदर्शनात्, जनकादीनामपि यथापूर्वं क्षुत्पिपासादीनामनुमितत्वात्। तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वमित्याद्युक्तं साहसमात्रम्। अन्यथा ''भोगेन त्वितरे क्षपयित्वा संपद्यन्ते'' इति सूत्रेण यावन्मरणं विदुषोऽपि यथापूर्वं सुखदुःखानुभवस्य दर्शितत्वमसङ्गतं स्यात्। अत एवोक्तं आपस्तम्बेनापि — ''बुद्धेश्चेत् क्षेमप्रापणं इहैव न दुःखमुपलभेत — एतेन परं व्याख्यामीति''। यदुक्तं रज्जुसर्पदृष्टान्तेन आत्मतत्त्वज्ञानाद् मिथ्याभिमाननिवृत्त्या दुःखनिवृत्तिरिति, तत्तुच्छम्, जगतो मिथ्यात्वस्यैव असिद्धत्वात्। किं तावज्जगन्मिथ्यात्वम्, त्रैकालिकनिषेधप्रतियोगित्वम्। तथा हि — शुक्तौ रजतभ्रमानन्तरमधिष्ठानतत्त्वसाक्षात्कारे रूप्यं नास्ति नासीन्न भविष्यतीति स्वरूपेणैव ''नेह नाना'' इति श्रुत्या प्रपञ्चस्य स्वरूपेणैव निषेधस्य प्रतीयमानत्वात्। त्रैकालिकनिषेध-प्रतियोगित्वं जगति वर्तते, इति चेन्न, त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैतहानिः, अतात्त्विकत्वे तस्यापि निषेध इत्यनवस्थापत्तेः। न च प्रपञ्चनिषेधाधिकरणीभूतब्रह्मा-भिन्नत्वान्निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिः, अभावस्याधिकरणात्मकत्वादिति वाच्यम्, ब्रह्मणः शून्यत्वापत्तेः शून्यवादिमतप्रवेशप्रसङ्गः स्यात्।

ननु घटाभावस्य कपालस्वरूपत्वेऽपि कपालस्य शून्यत्वाभाववद् ब्रह्मणः किं न स्यादिति चेत्, जगद्ब्रह्मणोरुपादानोपादेयभावोऽस्मन्मतानुकूलः स्यात्, स्थूल-चिदचित्प्रपञ्चाकारशक्तिविशिष्टं प्रति सूक्ष्मचिदचित्प्रपञ्चाकारशक्तिविशिष्टस्य ब्रह्मण उपादानत्वस्य स्वीकृतत्वात्। किञ्च, इदमप्यत्र विमर्शनीयम् — योग्यानुपलब्धेरभाव-प्रत्यक्षत्वावच्छिन्नं प्रति कारणत्वस्वीकाराद् योग्यत्वघटकप्रपञ्चप्रतियोगिसत्त्वोपादानस्य अशक्यत्वान्न त्रैकालिकनिषेधः प्रामाणिकः स्यात्। किञ्च, कालस्य निषेधविशेषणत्वं निषेधप्रतियोगिविशेषणत्वं वा? नाद्यः, तस्य निषेध्यभिन्नत्वान्निषेधकान्तरमपि कल्पनीयं स्यात्। न द्वितीयः, निषेध्यतावच्छेदककुक्षिप्रक्षिप्तत्वात्। निषेध्यस्वरूपाद्वा पूर्वकाले जगन्नासीत्, इदानीं नास्ति, अग्रे न भविष्यतीति त्रैकालिकनिषेधो व्याहन्येत।

ननूक्तदृष्टान्तानुसारेण निषेधसंभवे कथं व्याहतिरिति चेत्, तत्र कालादीनां सत्त्वेन कथञ्चित् स्वीकारेऽपि दृष्टान्ते तथाभावाद् व्याहतेस्तादवस्थ्यात्। प्रपञ्चस्य त्रैकालिकनिषेधप्रतियोगित्वाभावे— "नेह नाना", "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिप्रपञ्चापवादप्रतिपादकश्रुतीनामप्रामाण्यमिति चेन्न, वाचारम्भण-श्रुतीनां शिवोपादानत्वात्, प्रपञ्चस्य तत्तादात्म्यबोधकत्वान्न मिथ्यात्वबोधकत्वमिति श्रुतितात्पर्यस्य वक्तुं शक्यत्वात्, वाचारम्भणवाक्यानां तदनन्यत्वबोधनात्, "न मिथ्यात्वाय कल्पन्ते जगतः शिवरूपतः" इति स्मृतेश्च। अत एव भगवता व्यासेन "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रे तज्जन्यप्रपञ्चस्य तद्रूपत्वं निर्दिष्टम्।।

अपि च, अध्यारोपस्तु ब्रह्मणस्तदन्यस्य वा? नाद्यः, ब्रह्मणः शरीरेन्द्रियादि-शून्यत्वात्, [न द्वितीयः,] "सदेव सौम्येदमग्र आसीत्" इत्यादौ सृष्टेः प्राग् द्वितीयवस्तुनिषेधदर्शनात्, तदा तदन्यस्वीकारे शुद्धाद्वैतभङ्गप्रसङ्गाच्च। ज्ञाननिवर्त्यत्वं जगन्मिथ्यात्वमिति चेत्, तदसंभवस्य पूर्वमेव दर्शितत्वान्नात्र पिष्टपेषणं क्रियते। न कुत्रापि वेदान्ते ब्रह्मज्ञानेन प्रपञ्चनिषेधो विधीयते, "सर्वो वै रुद्रः", "सर्वं खल्विदं ब्रह्म" इत्यादिना सर्वप्रपञ्चस्य शिवात्मकत्वोपदेशात्। "नान्यत् पश्यति नान्यत् शृणोति" इत्यादिश्रुत्या मुक्तात्मनामिदन्तारूपघटपटात्मकप्रपञ्चत्वेन व्यवहृतमायापाशमेव सर्वशिवात्मकज्ञानेन तिरोधीयत इति ज्ञायते। अतो जगतो मिथ्यात्वमयुक्तम्, अन्यथा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुतेरप्रामाण्यं स्यात्। जगद्ब्रह्मणोरुपादानोपादेयत्वे तस्य प्रामाण्यं स्यात्।

किञ्च, "अखण्डाद्वैतभाने तु सर्वं ब्रह्मैव नान्यथा। ज्ञानाद्विकल्पबुद्धिस्तु लीयते न स्वरूपतः।।", "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इति गीतायां च श्रूयते।

ननु "असद्वा इदमग्र आसीत्", "एमेवाद्वितीयं ब्रह्म" इत्यादिश्रुत्या प्रपञ्चस्यासत्त्वोपदेशात् कथं जगतस्त्रैकालिकसत्यत्वमिति चेन्न, तत्रासत्पदस्य नामरूपविभागानर्हप्रपञ्चार्थकत्वात्, अन्यथा "ततो वै सदजायत" इत्यनेन विरोधः स्यात्। तस्मात् प्रतिपत्तिविधिविषयतयैव वेदान्तानां सार्थक्यम्, न तु सिद्धवस्तु-प्रतिपादनेन। एवं च तस्मात् प्रमाणान्तरानवगतस्वाभाविकानन्तशक्तिविशिष्टजगदुभय-कारणपशुपाशनियामकसकलनिष्कलस्थूलचिदचित्प्रकाशकसत्यज्ञानानन्तकल्याण-गुणविभवाश्रयलिङ्गरूपपरब्रह्मण उपासनाविधिपरकत्वेन तद्विषयाकाङ्क्षायां मानान्तरागम्यसिद्धवस्तुप्रतिपादकत्वेन च तेषां सार्थक्यं प्रामाण्यं चेति सिद्धम्।

अपि च, न स्वप्नवन्मिथ्यात्वं जगतः, अर्थसिद्धिक्रियासिद्धिदर्शनात्। विधिनिषेधविधायकशास्त्राचार्ययोरुपदेशादिकर्तव्यायोगेन बुद्धमतप्रवेशाच्च, "नाभाव

उपलब्धेर्वैधर्म्याच्च न स्वप्नादिवत्'' इति द्वितीयाध्याये मिथ्यात्ववादस्य निरस्तत्वात्। अत एव एतन्मिथ्यावादमुद्दिश्य— ''मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च। मयैव कथितं देवि कलौ ब्राह्मणरूपिणा।। अपार्थं श्रुतिवाक्यानां दर्शयित्वातिगर्हितम्। कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते।। सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते।'' इत्यादिविज्ञानभिक्षुप्रमुखप्राचीनभाष्यकारादिस्वीकृतपद्मपुराणादिवाक्यं श्रूयते। अथ च न स्वप्नवज्जगतो मिथ्यात्वम्— ''जीवस्योन्नतिनाशौ च मास्तामद्वैतवादिनाम्। स्वप्नावस्थासमुत्पन्नपीयूषविषपानतः।।'' इति। उक्तं चान्यत्रापि — ''भार्यात्वभ्रमविषये सुतायां चेत् स्वदारता। तात्कालिकं तया सार्धं मैथुनं स्यादपातकम्।।'' इत्याद्यनेकानिष्टापत्तेर्न युक्तं जगतो भ्रमविषयत्वं वक्तुम्।

## [ग्रन्थपातः]

अत्र तत्तु समन्वयादिति सूत्रार्थविचारः क्रियासारे —

एतेषां ब्रह्मवाक्यानामन्वयो ब्रह्मणि स्मृतः ।।१४३।।

समन्वयात्तु तद् ब्रह्म धार्यं पूज्यं मुमुक्षुभिः ।
वैषम्यद्योतनार्थाय तुशब्दोऽयं प्रकाशितः ।।१४४।।

तस्माद्विषयवाक्यानि बह्वर्थानि न संशयः ।
तत्रैकार्थमुदाहृत्य स्वस्वबुद्ध्यनुसारतः ।।१४५।।

लोका मुह्यन्ति सततं विवदन्तः परस्परम् ।
पुनः संसारचक्रेऽस्मिन् भ्रमन्ति परिमोहिताः ।।१४६।।

कण्वादिकृतशापाश्च परतन्त्रा जना भुवि ।
साधुमार्गं परित्यज्य मार्गान्तरमुपासते ।।१४७।।

ते सर्वे तप्तनरके पतन्ति सततं ध्रुवम् ।
किमस्ति बहुनोक्तेन मानुषं जन्म दुर्लभम् ।।१४८।।

तत्रापि दुर्लभं जन्म कुले शैवस्य कस्यचित् ।
वीरशैवान्वये जन्म परमं दुर्लभं स्मृतम् ।।१४९।।

तत्र जाता नराः सर्वे वीरशैवा नरोत्तमाः ।
विष्ण्वादिदेवसङ्घानां रक्षकत्वात् सदाशिवः ।।१५०।।

वीरः स तु समाख्यातस्तल्लिङ्गं शिव उच्यते ।
वीरलिङ्गं समभ्यर्च्य तत्स्वरूपं प्रयन्ति ये ।।१५१।।

ते वीरशैवा लोकानां नित्यं क्षेमाभिलाषिणः ।
त्रिपुण्ड्रावलिभिर्दीप्ता रुद्राक्षस्रगलङ्कृताः ।।१५२।।

शिवलिङ्गार्चनपराः शिवभक्तप्रपूजकाः ।
पञ्चाक्षररता नित्यं गुर्वाराधनतत्पराः ।।१५३।।

कीर्तनीयाश्च वन्द्याश्च दर्शनीयाः प्रयत्नतः ।
शिवलोकाच्च गलितास्ते शिवा नात्र संशयः ।।१५४।।

लिङ्गाङ्गसामरस्येन जीवन्मुक्ताः समाहिताः ।
तस्मात् सर्वप्रयत्नेन लिङ्गं धार्यं मनीषिभिः ।।१५५।।

शिवस्वरूपलाभाय पशुपाशनिवृत्तये ।
तल्लिङ्गधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान् ।।१५६।।

विषपानेन नित्यत्वं कुरुते स्वात्मनो हि सः ।
यो लिङ्गधारणं मुक्त्वा पशुशास्त्ररतो भवेत् ।।१५७।।

करस्थं पायसं त्यक्त्वा कूर्परं लेढि चात्मनः ।
अथातो ब्रह्मजिज्ञासा जन्माद्यस्य यतः शिवात् ।।१५८।।

तस्मात्तच्छास्त्रयोनित्वाद् भूयस्तत्तु समन्वयात् ।
वेदान्तप्रत्ययन्यायमंशांशित्वमधात् स्वयम् ।।१५९।।

अंशो नानेति न्यायेन तदेव परिकीर्त्यते ।
शिवांशब्रह्मविष्ण्वाद्या अंशी देवः शिवः स्मृतः ।।१६०।।

सर्वोपास्यो महादेवः सर्वे चोपासकाः स्मृताः ।
कथं तयोः प्रभेदो हि जीवात्मपरमात्मनोः ।।१६१।।

सर्वज्ञत्वादयो धर्माः शिवस्य परमात्मनः ।
किञ्चिज्ज्ञत्वादयो धर्मा जीवानामिति निश्चितम् ।।१६२।।

अभेदः कथमत्यन्तं भेदाभेदौ व्यवस्थितौ ।
ब्रह्मणः शास्त्रयोनित्वं कथं तन्न भवेन्निजम् ।।१६३।।

आम्नायस्य क्रियार्थत्वादक्रियत्वाच्छिवस्य तत् ।
बृहिक्रियायाः कर्त्रादिप्रकाशनमतो न च ।।१६४।।

इति चेत्तत्र वक्ष्यामः समन्वयनिरूपणम् ।
वेदान्तैरवगम्यन्ते सर्वज्ञत्वादयो गुणाः ।।१६५।।

वेदान्तेषु च वाक्यानि समन्वयदृढानि हि ।
एतेन शास्त्रयोनित्वं ब्रह्मणो दृढमिष्यते ।।१६६।।

ईक्षतेर्नाशब्दमित्यादिसूत्रार्थविचारः क्रियासारे —

ईक्षतेर्नाशब्दमिति ह्येतदारभ्य केवलम् ।
प्रथमाध्यायपर्यन्तं समन्वय इहोच्यते ।।१६७।।

सदेवेत्यादिवाक्यानि श्रूयन्ते तत्र तत्र तु ।
सच्छब्देन च किं ब्रह्म प्रधानं वेति संशयः ।।१६८।।

किं तावत् प्राप्तमधुना प्रधानमिति कश्चन ।
अचेतनस्य जगत उपादानमचेतनम् ।।१६९।।

मृद्दृष्टान्तानुसाराच्च चेतनं न विलक्षणम् ।
सच्छब्देन परं ब्रह्म गृह्यते ह्यात्मशब्दवत् ।।१७०।।

ईक्षतेर्ब्रह्मधर्मत्वान्न प्रधानस्य युज्यते ।
अशब्दं हि प्रधानं तन्न हि तद्वाचकः स्मृतः ।।१७१।।

उक्तो मृदादिदृष्टान्तो विषमो नैव युक्तिमान् ।
तत्तेज ऐक्षतेत्यादौ तेज इत्यौपचारिकम् ।।१७२।।

एवं गौणं प्रधानेऽपि चेक्षणं हि तदोच्यते ।
गौणश्चेन्नात्मशब्दादित्येतत्सूत्राद् दृढीकृतम् ।।१७३।।

अप्तेजसोरीक्षणं हि गौणं युक्तं न चेतरत् ।
इह सच्छब्दवाच्यस्य चेक्षितुर्मुख्यमीक्षणम् ।।१७४।।

आत्मशब्दपरामर्शात् स आत्मेत्यादिवाक्यतः ।
अप्तेजसोरपि तथा मुख्यमेवेक्षणं भवेत् ।।१७५।।

तदीक्षणाभिधानं हि चेश्वरस्याभिमानिनः ।
यथा राज्ञो ह्यात्मशब्दो भृत्ये सर्वार्थकारिणि ।।१७६।।

तथा प्रधाने सच्छब्दो युज्यते वीक्षणं च तत् ।
तन्निष्ठस्य च मोक्षोऽत्र ह्युपदेशाद्विधीयते ।।१७७।।

तन्निष्ठा ब्रह्मनिष्ठा हि ते वै मोक्षाधिकारिणः ।
तस्मात् प्रधानमिति च यदुक्तं तन्मृषा भवेत् ।।१७८।।

जगतः कारणं ब्रह्म चोपास्यं हि मुमुक्षुभिः ।
नायमात्मेति वाक्येन शिवस्य वरणं तनोः ।।१७९।।

वरणं नाम तद्रूपधारणं विधिमार्गतः ।
लिङ्गाङ्गेत्यादिवाक्येन मोक्षमार्गैकतत्पराः ।।१८०।।

अमृतस्येति वाक्येन धारणं प्रतिपादितम् ।
तन्निष्ठा एव मनुजा अतिवर्णाश्रमे रताः ।।१८१।।

त एव हि महात्मानो ब्रह्मनिष्ठा उदाहृताः ।
लिङ्गाङ्गसामरस्येन ब्रह्मभावमुपाश्रिताः ।।१८२।।

सारूप्यरूपिणीं मुक्तिं संप्राप्य परदुर्लभाम् ।
कृतकृत्या भवन्त्येव शिवानन्दभुजोऽनिशम् ।।१८३।।

अथोमित्यादिवाक्येन निश्चितं लिङ्गधारणम् ।
तन्मोक्षसाधनं पुण्यं तद्धार्यं हृदयाम्बुजे ।।१८४।।

अतः सच्छब्दवाच्यं हि ब्रह्मैव तु न संशयः ।
तच्चिच्छक्त्यविनाभूतं जलशैत्यमिवोदितम् ।।१८५।।

माया प्रधानमित्येतद्युक्तियुक्तं न चाभवत् ।
अजामन्त्रेण चिच्छक्तियुक्तस्य परमात्मनः ।।१८६।।

लीलया जगदुत्पत्तिस्तिरोधानं पुनः प्रभोः ।
कठकैवल्यमाण्डूक्यप्रश्नाद्युपनिषत्सु च ।।१८७।।

वेदान्तसारप्रणववज्रसूच्यादिकासु च ।
प्रकाशितार्थाः सर्वे च विस्मृताः कैश्चिदप्यहो ।।१८८।।

अतदर्था निश्चिताश्च मोहादन्यायतत्परैः ।
अनेन किं बहूक्तेन सूत्रार्थो ह्ययमेव हि ।।१८९।।

अत्रायमवधेयोऽर्थः सूत्रस्वरसतस्ततः ।
ब्रह्म जिज्ञासितं लिङ्गं शिवतत्त्वं श्रुतीरितम् ।।१९०।।

समनन्तरसूत्राणां त्रयाणां सौत्रशब्दतः ।
तात्पर्यं वीरशैवोक्तपदार्थेष्वेव दृश्यते ।।१९१।।

तथाहि जन्म लोकानां स्थेमसंहारकर्मणी ।
यतो हि ब्रह्मणस्तस्य ब्रह्मत्वमिति लक्षणम् ।।१९२।।

यतो वेत्यादिविषयवाक्येन तदलङ्कृतम् ।
तत्र तावदियान् भेदः सूत्रीयपदभञ्जने ।।१९३।।

जन्माद्यस्य यतश्चेति पदद्वयमिदं ततः ।
पिण्डादिज्ञानशून्यान्तस्थलस्यैकशतस्य तु ।।१९४।।

यतः सकाशादित्येतद् ब्रह्मलक्षणमुच्यते ।
सृष्टिवाक्यविरोधोऽपि पूर्वमेव निराकृतः ।।१९५।।

यतश्च स्थलशब्देन प्रोच्येते स्थितिसंहृती ।
स्थीयन्ते सर्वतत्त्वानि लीयन्ते यत्र तत्स्थलम् ।।१९६।।

स्थितिसंहारसापेक्षं जन्म चेति त्रयं स्थलम् ।
यतो वेत्यादि विषयवाक्यार्थानुगुणेन हि ।।१९७।।

विस्तार्य स्थलशब्देन कामिकादौ विचार्यते ।
अथवाकारवाच्यस्य विष्णोर्जन्म यतः शिवात् ।।१९८।।

अथर्वशिखया चोपनिषदा यः समर्थितः ।
शास्त्रशासनकर्तृत्वाद्योनित्वात्तु ततः परम् ।।१९९।।

अकारवाच्यविष्णोस्तद्योनित्वात् कारणात्मकम् ।
लिङ्गं नियामकं तत्त्वं सूत्रतात्पर्यतः श्रुतम् ।।२००।।

शास्त्रं योनिर्यस्य तस्य शास्त्रयोनित्वमेव वा ।
शास्त्राणां योनिरित्येवमस्माकं तत्समञ्जसम् ।।२०१।।

सर्वार्थसाधनोपायाः सन्ति सर्वागमेषु च ।
तथापि विवशा मर्त्या यच्च किञ्चिद्वदन्ति हि ।।२०२।।

एषा रीतिः सर्वसूत्रसम्मता च व्यवस्थिता ।
अन्याश्च रीतयः सर्वा न सूत्रानुगुणाः कृताः ।।२०३।।

ब्रह्मण्यध्यास इति यज्जगतामिष्यते परैः ।
असूत्रितं तु तत्सर्वमज्ञानपरिकल्पितम् ।।२०४।।

मूढा मुह्यन्ति सततं यं विना मार्गमुत्तमम् ।
ननु तर्ह्युच्यते ब्रह्म वेदेत्यादिविधानतः ।।२०५।।

एकं ब्रह्म च ब्रह्मैव स्वाविद्येत्यादिवाक्यतः ।
अभेद एव कथितो भेदाभेदः कथं भवेत् ।।२०६।।

इति चेन्न ब्रह्म वेद ब्रह्मैव भवतीति यत् ।
उपासनाङ्गं तदिति निर्णीतं श्रुतिसूत्रयोः ।।२०७।।

तन्निष्ठस्यैव मोक्षोऽत्र ह्युपदेशाद् ध्रुवं परम् ।
ब्रह्मैव सच्छब्दवाच्यं तस्मादन्यत्र चाभवत् ।।२०८।।

हेयत्वावचनाच्चैव स्वाप्ययादपि नेतरत् ।
अप्ययो गतिसामान्यं ब्रह्मण्येवेति निश्चितम् ।।२०९।।

श्रुतत्वाच्च प्रधानादेर्न हेतुत्वं कदाचन ।।

इष्टलिङ्गधारणमुक्तम्। स्पष्टी(निरा)कृतं लिङ्गधारणविधायकानां वचसामसामञ्जस्यं क्रियासारे लिङ्गधारणोपदेशे। तस्मात्तत एवावगन्तव्यं मुमुक्षूणां लिङ्गधारणमावश्यकमिति। तथा च ब्रह्मनिष्ठानां पञ्चाचार-अष्टावरणरूपेणेष्टादिलिङ्गनिष्ठानां मोक्षस्य सङ्कुचितस्वशक्तिविकासस्य उपदेशात्, छान्दोग्यादिषु कथनात्। नह्यचेतनप्रधाननिष्ठानां कुत्रापि मोक्षोपदेशस्यादर्शनात् प्रधानं जगज्जन्मादिकारणं भवति। तथा च "अजामेकां लोहितकृष्णशुक्लाम्" इत्यादिश्रुतीनां पूर्वोक्तस्वविमर्शशक्तिस्वातन्त्र्यपरिकल्पितमायाशक्तिपरकत्वेनान्वयसंभवात् तादृशशक्तिसहितषट्स्थलपरशिवलिङ्गमेव जगज्जन्मादिकारणम्। तस्मात्तदेव मुमुक्षुभिरुपास्यम्।

उपासनाप्रकारश्च जगज्जन्मादि……रीयः परशिव; स एव…देन पुनः पुनः… विषयां…चिन्तनेन सङ्कुचितविमर्शशक्तेः कुण्डलिन्या विकासो जायते। तदुक्तं स्पन्दसूत्रे — "मध्यविकासाच्चिदानन्दलाभः" इति। तट्टीकायां संविदेव भगवती मध्यमित्युक्तत्वाद् मध्यभूता सा विमर्शशक्तिर्मायादशायां स्वस्वरूपं गूहयित्वा प्राणशक्तिभूमिं स्वीकृत्या-वरोहक्रमेण बुद्धिदेहादिभुवमधिशयाना नाडीसहस्रसरणिमनुसृता सती तत्रापि पलाशपर्णमध्यशाखान्यायेन आब्रह्मरन्ध्रादधोवक्त्रपर्यन्तं प्राणशक्तिब्रह्माश्रयमध्यम-नाडीरूपतया प्राधान्येन स्थिता, तत एव सर्ववृत्तीनामुदयात् तत्रैव च विश्रामात्। एवंभूतापि एषा पशूनां निमीलितस्वरूपैव स्थितेत्युक्तम्। उक्तं च शिवसूत्रविमर्शिन्याम् — "या सा शक्तिः परा सूक्ष्मा निराचारेति कीर्तिता। हृद्बिन्दुं वेष्टयित्वान्तः सुषुप्तभुजगाकृतिः।। तत्र सुप्ता महाभागे न किञ्चिन्मन्यते उमे। चन्द्राग्निरविनक्षत्रैर्भुवनानि चतुर्दश। क्षिप्त्वोदरे तु या देवि विषमूढेव सा गता" इत्यादिना। तथा च तादृशपराशक्तेः सङ्कोचप्राधान्येन देहादौ कुण्डलिनीरूपतया अवस्थितत्वाद् गुरुमुखात् शिवयोगरूपोपायं ज्ञात्वा तादृशकुण्डलिनीशक्तेर्विकासः कार्यः। तद्विकासे तु संसा…व एव भवति। अत एव "गुरुरुपायः"…।

अन्यत्रापि प्रत्यभिज्ञाहृदयसूत्रे — "विकल्पक्षयशक्तिसङ्कोचविकासवाह-च्छेदाद्यन्तकोटिनिभालनादय इह उपायाः" इति प्रागुक्तपञ्चविधकृत्यकारित्वानुसरणेन कुण्डलिनीशक्तेर्विकासो जायते। विकल्पक्षयादीन्यप्युपायान्तराणीति ज्ञातव्यम्। विकल्पक्षयस्याग्रिमसर्वेषामुपायानां मूर्धन्यत्वात् प्रथममुक्तम्, शब्दज्ञानानुपातिवस्तुशून्य-रूपस्य विकल्पस्य स्वस्वरूपस्थितिप्रतिबन्धकत्वात् तत्तिरोधानेन शक्तिविकासो जायते। शक्तिसङ्कोचो नाम इन्द्रियद्वारेण प्रसरन्त्या एव शक्तेराकुञ्चनक्रमेणोन्मुखीकरणम्। अनेनोन्मुखीकरणेन शक्तिविकासो जायते, "पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यन्ति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षद् आवृत्तचक्षुरमृतत्वमिच्छन्।।" इति श्रुतेः। शक्तिविकासो नाम "अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः" इत्युक्तरीत्या अन्तर्निगूढायाः शक्तेः खेचरीमुद्रया बहिःप्रसरणम्। वाहच्छेदो वामदक्षिणगतयोः प्राणापानयोश्छेदः आदिकोटिर्हृदयम्, अन्तकोटिर्द्वादशान्तः, ब्रह्मरन्ध्रमिति यावत्, तयोर्निभालनं नाम चित्तनिवेशनेन परिशीलनम्, इत्यादयः सङ्कुचितविमर्शशक्तेः [ विकास ]-करणे उपायाः।

अयमत्राशयः — प्रबलशक्तिको रोगादिवशात् क्षीणशक्तिकोऽपि व्यायामा-भ्यासवशान्महतीं शक्तिं प्राप्नोति। तथा स्वलीलावशात् सङ्कुचितशक्तिकः सन् परमेश्वर

एव संसारीत्युच्यते। पुनः शिवयोगसाधनवशाद् विकसितशक्तिकः सन् परमेश्वर एव भवति। परमेश्वरस्य एतादृशहीनदशाप्राप्तिं प्रति स्वलीलाया एव कारणत्वं वाच्यम्, छत्रचामरवाहनादिसम्पद्युक्तस्यापि राज्ञः कदाचित् स्वलीलया पादचारित्वदर्शनात्। तथा च एतादृशशक्तिविकासस्यैव मोक्षत्वमिति सिद्धम्। न तु पराभिमत-विस्मृतकण्ठचामीकरप्राप्तिवत् स्वस्वरूपप्राप्तेर्मोक्षत्वम्। अस्मन्मते बन्धरूपसङ्कोचस्यापि विचार्यमाणत्वे विमर्शशक्तिरूपत्वेन ज्ञायमानत्वात् तादृशशक्तिविकासस्यैव मोक्षत्वम्। स्वशक्तिविकासरूपमोक्षायेति स्वप्रभानन्दशिवाचार्यैरप्युक्तत्वात्, "तथाविधश्चायं शक्तिदरिद्रः संसारी उच्यते। स्वशक्तिविकासे तु शिव एव" इति क्षेमराजेनाप्युक्तत्वाच्च, एतादृशोपायगर्भलिङ्गधारणदीक्षायास्तादृशमोक्षजनकत्वात्, "मोक्षार्थिनां मुक्तिहेतु-र्लिङ्गधारणमीर्यते" इत्यादिना सूत्रकारेणैव लिङ्गपुराणे उक्तत्वात्। लिङ्गधारणनिष्ठा एव ब्रह्मनिष्ठा........"अमृतस्येति वाक्येन धारणं प्रतिपादितम्। तन्निष्ठा एव मनुजा अतिवर्णाश्रमे रताः।। ते एव वै महात्मानो ब्रह्मनिष्ठा उदाहृताः।।" इति नीलकण्ठशिवाचार्येण "तन्निष्ठस्य मोक्षोपदेशात्" इति सूत्रघटिततन्निष्ठपदस्य लिङ्गधारणनिष्ठपरकत्व-मित्यङ्गीकृतत्वात्, लिङ्गधारणनिष्ठागरिष्ठानां वीरशैवानां मोक्षस्योपदिश्यमानत्वान्न प्रधानातिव्याप्तं जगज्जन्मादिकारणत्वलक्षणम्।।७।।

सच्छब्दवाच्यं प्रधानमेव कुतो न भवति, स्थूलारुन्धतीन्यायेन तस्यापि सच्छब्दवाच्यत्वमस्तु? इत्यतो हेत्वन्तरमाह —

## हेयत्वावचनाच्च ।।८।।

हेयत्वस्य निषेधस्य, अवचनाद् अनुक्तेरित्यर्थः। ब्रह्मण उपास्यत्वे हेयत्वस्या-वचनात्। "नोपास्यौ प्रकृतिजीवौ" इत्यादिना प्रधानध्यानस्य हेयत्ववचनाद् जगज्जन्मादिकारणत्वेन नोपास्यं प्रधानमिति सिद्धम्। "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि"इति वाक्येन जगदभिन्नपरशिवाभेदस्य मुमुक्षुश्वेतकेतोर्ध्येयत्वेन विधानात् प्रधानस्य सच्छब्दवाच्यत्वं न सम्भवति। यथा अरुन्धतीं दिदर्शयिषु-स्तत्समीपस्थस्थूलतारामरुन्धतीत्वेन ग्राहयित्वा तां निषिध्य पश्चादरुन्धतीं [ दर्श ] यति, तथा मुमुक्षोः प्रधानोपासनस्य वक्तुमशक्यत्वात् तद्विधायकप्रमाणाभावात्, "शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य", "ब्रह्मविदाप्नोति परम्", "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिना —

त्वं ब्राह्मणस्त्वदुपधावनमेव कार्यं
तद्ब्राह्मणैस्त्वदितरे न भवन्त्युपास्याः ।
न ब्राह्मणा न वरवर्णनिषेवणेन
सम्भावयेम यदि नः प्रपदं प्रमाणम् ।।

इति हरदत्ताचार्योक्त्या च शिवेतरध्यानस्य मोक्षाहेतुत्वावगमाच्च न प्रधानं सच्छब्दवाच्यम्।

अथवा हेयत्वावचनाद् यदि प्रधानं सच्छब्दवाच्यम्, ''स आत्मा तत्त्वमसि'' इति स्थूलारुन्धतीन्यायेन उपदिष्टं स्यात्, तदा स मुमुक्षुश्वेतकेतुस्तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षुः प्रधानस्य हेयत्वं ब्रूयात्। तथा हेयत्वस्यावचनान्न सच्छब्दवाच्यं प्रधानम्। चकारः प्रतिज्ञाविरोधहेत्वन्तरद्योतकः। तथा च प्रधानस्य सच्छब्दवाच्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया विरोधापत्तेः, ''यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्'' इत्यादिवाक्येन एकविज्ञानात् सर्वविज्ञानप्रतिज्ञाया ज्ञायमानत्वात्, जडप्रधानस्य जगत्प्रपञ्चकारणत्वेऽपि चेतनकारणत्वासम्भवात्, तज्ज्ञानेन सर्वज्ञानासम्भवान्न सच्छब्दवाच्यं प्रधानम्।।८।।

पुनरपि हेत्वन्तरमाह —

## स्वाप्ययात् ।।९।।

स्वस्मिन् शिवलिङ्गे, अप्ययो लय इत्यर्थः। तस्मान्न प्रधानं सच्छब्दवाच्यम्। हंसोपनिषदि — ''लिङ्गे सुषुप्तिः पद्मत्यागे तुरीयम्'' इति हृत्पद्मावच्छिन्नान्तरप्राणलिङ्गे सुषुप्तौ सर्वेषां जीवानां लय इति स्पष्टमुक्तम्।

अपि च, ''यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति। स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति'' इति श्रुतावपि जगत्कारणं ब्रह्मैवेति ज्ञायते, स्वपितीत्यत्र अपिपूर्वकितेर्लयार्थकत्वात्, अचेतनप्रधाने चेतनजीवस्य लयासम्भवात्, ''सुषुप्तौ शङ्करे लयः'' इति स्मृतेश्च, प्रधाने जीवाकर्षणसत्त्वाभावाच्च सर्वजीवलयाधिष्ठानस्यैव परब्रह्मणः सच्छब्दवाच्यत्वमिति सिद्धम् ।।९।।

आत्मसम्बन्धित्वात् प्रधानमेव स्वशब्देनोच्यते, इत्यत्राह —

## गतिसामान्यात् ।।१०।।

गतेर्जीवगमनस्य सामान्याद् ईश्वरे सुषुप्तौ समन्वयाद् आत्मीयत्वात् स्वशब्देन प्रधाने गृह्यमाणे तस्याचेतनत्वाच्चेतनगतेस्तत्र समन्वयस्यासम्भवात्। ''प्राज्ञेनात्मना

संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्'' इति श्रुतेश्च न प्रधाने जीवलयः। केचित्त्वस्य सूत्रस्य अर्थमन्यथा व्याचक्षते। सर्वेषु वेदान्तेषु चेतन [ हे ] तोः सामान्यान्नाचेतनं प्रधानं जगत्कारणमित्यस्यार्थस्य ''तत्तु समन्वयात्'' इतिसूत्रेणैव प्रतिपादितत्वात् पुनस्तादृशार्थवर्णने पौनरुक्त्यापत्तेः।..... प्रधानं न सच्छब्दवाच्यम् ।। १० ।।

## श्रुतत्वाच्च ।। ११ ।।

''एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढाः'' इति ब्रह्मण्येव प्रत्यहं सुषुप्तावस्थायां जीवगमनस्य श्रुतत्वादित्यर्थः।। ११ ।।

एतावता प्रथमसूत्रोक्तजिज्ञास्यब्रह्मणो जगज्जन्मादिकारणत्वलक्षणमचेतनप्रधाने नातिव्याप्तमित्युक्तम्, अतः परं चेतनजीवे नातिव्याप्तिरिति दर्शयति। अतिव्याप्तिश्च ''विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते'' इत्यादिना जगज्जन्मादिकारणत्वस्य जीवगतत्वावगमाद् भवति, अतः स एवोपास्य इति प्राप्ते, आह —

## आनन्दमयोऽभ्यासात् ।। १२ ।।

अन्नमयं प्राणमयं मनोमयं विज्ञानमयं चानुक्रम्य —''तस्माद्वा एतस्माद् विज्ञानमयादन्य आन्तर आत्मा आनन्दमयः'' इत्यानन्दमयस्य सर्वान्तरतमत्वस्य श्रूयमाणत्वाद् यस्य आनन्दमयत्वं तस्यैवोपास्यत्वमिति ज्ञायते। नह्यनादिस्वाभाविक-मायापाशबद्धतापत्रयानलदन्दह्यमाननानाशरीरप्रवेशनिर्गमनविशिष्टस्य जीवस्य आनन्दमयत्वं वक्तुं शक्यते।

ननु — ''तस्य प्रियमेव शिरः'' इत्यादिना आनन्दमयस्य प्रियाद्यवयवयोगस्य ज्ञायमानत्वाद् विकारार्थे मयट्श्रवणाच्च निरवयवनिर्विकारस्य परब्रह्मणः कथमानन्दमयत्वमिति चेन्न, अभ्यासात् पुनः पुनः श्रवणात्, शिवस्य परब्रह्मण एव बहुशो वेदान्तेषु आनन्दशब्दप्रयोगदर्शनात्, आनन्दमयं प्रस्तुत्य — ''तदप्येष श्लोको भवति'', ''रसो वै सः'', ''रसं ह्येवायं लब्ध्वा आनन्दी भवति'', ''आनन्दो ब्रह्मेति व्यजानात्'', ''आनन्दात्मा'' इत्यादिना परशिवस्यैव आनन्दशब्दस्य निर्णीतत्वात्, आनन्दमयस्य अन्यस्य कस्यचिदनुपदेशाच्च न यस्य कस्यचित् परब्रह्मातिरिक्तस्यानन्दमयत्वं सम्भवति। न च प्रियाद्यवयवयोगाज्जीवस्य आनन्दमयत्वसम्भव इति वाच्यम्, अवयवावयविभावस्य वास्तवस्यात्राऽविवक्षितत्वात्, किन्तु पक्षरूपकल्पनामात्रत्वात्, विज्ञानमयादीनां पक्षपुच्छाद्यवयवयोगासम्भवात्।। १२ ।।

ननु निर्विकारस्य कथमानन्दविकारत्वमित्यत्राह —

**विकारशब्दान्नेति चेन्न प्राचुर्यात् ।।१३।।**

मयट्प्रत्ययस्य विकारार्थकत्वात् परब्रह्मणो निर्विकारत्वात् परब्रह्मणो न आनन्दमयत्वमिति चेन्न, प्राचुर्यात् स्वार्थिकमयट्प्राचुर्यात्। यद्यप्यन्नरसमय इत्यत्र विकारार्थसम्भवोऽस्ति, तथापि प्राणमयादिषु न विकारार्थत्वम्, प्राणादीनां तद्विकारार्थत्वासम्भवात्, विकारभूतस्यान्यस्य तत्राप्रतिपादनाच्च। "अन्य आन्तर आत्मा प्राणमयः" इत्यादिना प्राणमयमात्मानमुपदिश्य, "तदप्येष श्लोको भवति" इति प्रतिज्ञाय, "प्राणं देवा अनुप्राणन्ति" इति केवलप्राणादिशब्दा एव पठ्यन्ते न मयडन्ताः। तस्मात् स्वार्थ एव मयट्, न विकारार्थे।।१३।।

किञ्च, न विकारार्थे मयडित्याह —

**तद्धेतुव्यपदेशाच्च ।।१४।।**

"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति" इत्यत्र आनन्दमयस्य सर्वजीवानन्दहेतुत्वश्रवणात् सर्वजीवप्राप्यत्वं ज्ञायते। यथा लोके पुरुषः स्वविद्ययैव परविद्याहेतुर्भवति, स्वधनेन परधनहेतुर्भवति, सूर्यः स्वप्रकाशेन अन्यप्रकाशहेतुर्भवति, तथा परमेश्वरः स्वस्वरूपानन्देन जीवानन्दहेतुर्भवति। तथा च तद्धेतोः =जीवानन्दहेतोः परमेश्वरस्य, व्यपदेशात् कथनादित्यर्थः।

यद्वा स आनन्दमयो हेतुर्यस्य जीवानन्दस्य स तद्धेतुः, तस्य व्यपदेशादिति सूत्रार्थः। तथा च आनन्दविकारस्य जीवानन्दस्य हेतुत्वासम्भवान्न विकारार्थे मयट्, स्वार्थ एवेति। न च "ब्रह्मपुच्छं प्रतिष्ठा" इत्युक्तपुच्छब्रह्मण एव आनन्दहेतुत्वव्यपदेशः, नानन्दमयस्येति वाच्यम्, अन्नमयादिष्वनन्तरश्लोकस्य पुच्छब्रह्मविषयत्वादर्शनात्। "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इत्यानन्दमयस्यैव परामर्शात्, आनन्दमयस्य पुच्छब्रह्मभिन्नत्वात्, अवयवावयविभावस्यामुख्यत्वात्।

अथवा "ब्रह्मपुच्छं प्रतिष्ठा" इत्यत्र ब्रह्मशब्देन "ब्रह्मसंस्थो अमृतत्वमेति" इत्यत्रेव प्रणवस्याभिप्रेतत्वात् तस्य तद्वाचकत्वात् प्रतिष्ठात्वम्, "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैकतरमन्वेति", "एतदालम्बनं श्रेष्ठम् एतदालम्बनं परम्" इत्यादिना प्रणववाच्यस्य आनन्दमयत्वश्रवणात्।।१४।।

इतश्च परब्रह्म एवानन्दमय इत्याह —

**मान्त्रवर्णिकमेव च गीयते ।।१५।।**

"ब्रह्मविदाप्नोति परम्" इत्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म", "यो वेद निहितं गुहायां परमे व्योमन्" इत्यत्र मन्त्रवर्णोदितं यत्प्राप्यत्वेन परब्रह्म तदेवैकं "आनन्दमयमात्मानमुपसंक्रामति" इति ब्राह्मणे गीयते निर्दिश्यते, अन्यस्य प्राप्यस्य अश्रवणात्, श्रुतपरित्यागेन अश्रुतकल्पनाया अन्याय्यत्वात्। "आनन्दो ब्रह्मेति व्यजानात्" इति विज्ञेयत्वेन निर्दिष्टस्यैव "आनन्दमयमात्मानमुपसंक्रम्य" इत्यानन्दमयशब्देनैव प्राप्यत्वविधानाद् आनन्दमयपरशिवलिङ्गमेव हृदम्बुजे प्राप्यं धार्यमित्यर्थः।।१५।।

इतश्च आनन्दमयः परमात्मैवेत्याह —

**नेतरोऽनुपपत्तेः ।।१६।।**

इतरो जीव आनन्दमयो न भवति। कुतः? अनुपपत्तेः, "तदप्येष श्लोको भवति" इत्युक्त्वा "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिना सर्वकारणत्वसर्वात्मकत्वादीनां धर्माणामुपदिश्यमानत्वात्, तादृशधर्माणां जीवेऽनुपपन्नत्वाद् नानन्दमयो जीवः।।१६।।

किञ्च, जीवस्यानन्दमयत्वोक्ते "तस्माद्वा एतस्माद्विज्ञानमयादन्य आन्तर आत्मा आनन्दमयः" इति विज्ञानशब्दवाच्यजीवादन्यत्वप्रतिपादकश्रुतेरप्रामाण्यं स्यादित्याह —

**भेदव्यपदेशात्।।१७।।**

तथा चोक्तश्रुतौ आनन्दमयस्य जीवभिन्नत्वकथनान्न जीवस्यानन्दमयत्वम्। नन्वत्र विज्ञानशब्देनान्तःकरणं गृह्यत इति चेन्न, "व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः" इति सूत्रेण विज्ञानशब्दस्य जीववाचकस्य वक्ष्यमाणत्वात्।।१७।।

ननु सत्त्वगुणस्य आनन्दरूपस्य प्रधानेऽपि विद्यमानत्वात् प्रधानस्यैवानन्दमयत्वं किं न स्यादिति चेत्, आह —

**कामाच्च नानुमानापेक्षा ।।१८।।**

अनुमीयत इत्यनुमानम्, सांख्यपरिकल्पितमचेतनं प्रधानमित्यर्थः। तस्य अपेक्षा आनन्दमयवाक्ये नास्ति। कुतः? कामात्। "सोऽकामयत बहु स्यां प्रजायेय" इति कामनाश्रवणात्, तथा च कामस्य इच्छाया अचेतनेऽसम्भवान्न प्रधानस्यानन्दमयत्वम् ।।१८।।

किञ्च, न प्रधानजीवयोरानन्दमयत्वमित्याह —

## अस्मिन्नस्य च तद्योगं शास्ति ।।१९।।

अस्मिन् आनन्दमये प्रकृतपरमशिवे, अस्य जीवस्य, चशब्देन प्रधानप्रपञ्चयोरपि तद्योगं नीरक्षीरवत् सिन्धुसैन्धववत् तस्य परशिवस्य योगम् ऐक्यं शास्ति प्रतिपादयतीत्यर्थः। "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।।", "ब्रह्म वेद ब्रह्मैव भवति", "तत्त्वमसि", "अहं ब्रह्मास्मि" इत्यादिश्रुतिषु परशिवभावापत्तेर्मुक्तित्वेनोपदिश्यमानत्वाज्जीवब्रह्मणोर्भिन्नत्वाराध्याराधकत्व-व्यापकत्वाव्यापकत्व-किञ्चिज्ज्ञत्वसर्वज्ञत्व-नियम्यनियामकत्वादिधर्माणां परस्परविरुद्धत्वेऽपि स्वस्वाभाविकशक्तिसङ्कोच-रूपाख्यातेरुक्तोपायादिभिर्विकसनदशायां तादृशाख्यातिनिवृत्त्या तन्निबन्धनकिञ्चिज्ज्ञत्व-सुखित्वदुःखित्वादिनिवृत्तेः परशिवभावापत्तिरूपो मोक्षो भवति। किञ्च, "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्मेऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति" इत्यत्र जीवस्याभयप्राप्तिं शास्ति शास्त्रम्। न च शिवयोगसाधनाभ्यासाद् अन्यतो मोक्षः संभाव्यते। तस्मादानन्दमयः परशिव एवेति सिद्धम्।

तत्र केचिद् रज्ज्वारोपितसर्पवद् ब्रह्मणि जीवत्वस्यारोपितत्वाद् मुक्तदशायां स्वकण्ठाभरण-दशमत्वविवेकसन्धानादिवद् जीवभावमापन्नस्य ब्रह्मणः स्वस्वरूपज्ञानमेव मोक्ष इति वदन्ति। अस्य पक्षस्य श्रुत्यादिविरुद्धत्वेन पूर्वं निराकृतत्वात् श्रौतमुमुक्षु-भिर्नादरणीयत्वम्, "ब्रह्मविदाप्नोति परम्" इत्याद्युपक्रमसिद्धवेद्यत्वप्राप्यत्वादिविरोधात्, "सोऽश्नुते सर्वान् कामान्" इत्यनवाप्तसकलकामानां शिवोपासकानां सर्वकामावाप्तिविरोधाच्च। ब्रह्मणोऽज्ञानाश्रयत्वे सर्वज्ञत्वादिभङ्गप्रसङ्गः। न च चन्द्रकलङ्कन्यायेनाज्ञानाश्रयत्वं सम्भवति, ब्रह्मणो निरंशत्वात्। यदि तयोरविरोधः, तत्त्वज्ञानादप्यज्ञाननिवृत्तिर्न स्यात्, "अविरोधितया कर्म नाऽविद्यां विनिवर्तयेत्" इति तैरेवोक्तत्वात्। अतः स्वस्वरूपज्ञानमेव मोक्ष इति वक्तुं न शक्यते। भ्रमरकीट-शुक्तिसलिलादिषु स्वाभाविकधर्मनिवृत्त्या भ्रमरत्वमौक्तिकत्ववत् स्वाभाविकजीवभावनिवृत्त्या शिवभावप्राप्तिर्मोक्ष इति सिद्धम्।

किञ्च, शिवस्य परब्रह्मणः स्वाभाविकशक्त्यनङ्गीकारे ब्रह्मणः प्रकाशरूपत्वेऽपि स्फटिकमणिमुकुरादेः प्रकाशवत् सच्चिदानन्दात्मकस्वस्वरूपपरामर्शाभावाज्जडत्वापत्तेर्दुरु-द्धरत्वाज्ज्ञानक्रियासामरस्यापन्नस्वाभाविकविमर्शशक्तिर्ब्रह्मणोऽस्तीत्यङ्गीकरणीयम्, "सन्

हृदयप्रकाशो भवनस्य क्रियाया भवति कर्ता। सैव क्रिया विमर्शः स्वस्था क्षुभिता च विश्वविस्तारा।।'' इति सारस्वतसूत्राद् भवनस्य भूसत्तायामितिधातोरर्थस्य क्रियाया हृदयप्रकाशस्य कर्तृत्वावगमात्, ''हृदयं तद्विजानीयाद् विश्वस्यायतनं महत्'' इति श्रुतेश्चराचरप्रपञ्चभित्तिभूतात्मप्रकाशस्य हृदयत्वावगमात् तादृशहृदयप्रकाशकर्तृकक्रियायाः स्वस्थत्वेऽविभागपरामर्शदशायां चिदानन्दमात्रविश्रान्तत्वे अस्मि-प्रकाशे-नन्दामीति स्वस्वरूपविमर्शवत्त्वंब्रह्मणः, अन्यथा जडत्वप्रसङ्गात्। अतस्तादृशज्ञानक्रियासामरस्यात्मिका विमर्शशक्तिः क्षुभिता चेत्, विभागपरामर्शदशायां सृष्ट्युन्मुखा यदा भवति, तदा विश्वविस्तारा शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वात्मकविचित्रविश्वस्फुरणमयी जायते। अर्थात् पूर्वोक्तरीत्या त्रिगुणात्मकमायाशक्तेर्वृश्चिकधूमोद्गमलोमनखादीनां गोमयानलसचेतनादिपरिकल्पि-तत्ववत् स्वविमर्शापरपर्यायेच्छाशक्तेः परिकल्पिततत्वात् तादृशमायाशक्तेस्त्रिगुणात्मकत्वात् सर्वप्रमाणप्रमेयव्यवहाराणां नानुपपत्तिः।

अथ च ''दृश्यते त्वग्रया बुद्ध्या'' इति सूत्रेण ''पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'' इति श्रुत्या च ज्ञानक्रियागर्भेच्छाशक्तिर्ज्ञायते, श्रुतिस्थचकारस्यानुक्तेच्छाशक्त्यर्थकत्वात्। तथा च ज्ञानबलक्रिया ज्ञानशक्तिः क्रिया-शक्तिगर्भा स्वाभाविकी अनाद्यनन्ता इच्छाशक्तिः, विविधैव अनन्तशक्तिरूपा, अत एवास्याः परत्वं श्रूयते, ''ईशनीभिर्जननीभिः परमशक्तिभिः'' इत्यादिवाक्येनान्यत्रानन्तविधा इति श्रूयते। अथवा स्वानुभवैकसिद्धा न प्रत्यक्षादिप्रमाणसिद्धा इति दर्शनाय 'श्रूयते' इत्युक्तम्। पराभिमतार्थे चकारस्य साङ्गत्याभावान्न तादृशार्थः शक्तिपातपवित्रितहृदयैरादरणीयः। उक्तं च स्पन्दप्रदीपिकायाम् — ''स्वभावादेकरूपापि नानात्वं प्रतिपद्यते। ज्ञानस्य शक्तिसङ्कल्पैर्लक्ष्मीश्चिन्तामणेरिव।।'' इति। उक्तं च कक्ष्यास्तोत्रेऽपि — ''ज्ञानक्रियादिगर्भेच्छाशक्तिर्यः प्रसरात्मकः। सङ्कल्पोक्तः समुन्मेषः प्रोक्तं ह्येतत् स्वतन्त्रके।।'' इ[ति], ''इच्छा त्वेका विभोः शक्तिः प्राग्विधाज्ञक्रियाविधा'' इति च। अपि च —''या सा शक्तिर्जगद्धातुः कथिता समवायिनी। इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते।। सैकापि सत्यनेकत्वं यथा गच्छति तच्छृणु। एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम्।। ज्ञापयन्ती जगत्यन्ते ज्ञानशक्तिर्निगद्यते। एवं भवत्विदं सर्वमिति कार्योन्मुखी यदा।। जाता तदैव सा तद्वत् कुर्वन्त्यपि क्रियोच्यते। एवमेषा द्विरूपापि पुनर्भेदैरनेकताम्।।'' इति। उक्तं च रहस्यस्तोत्रेषु — ''शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते। शक्तयश्च जगत्सर्वं शक्तिमांस्तु महेश्वरः।।'' इति।

ननु ''पदार्थद्वयमुच्यते'' इत्यनेन शक्तिशक्तिमतोर्भेदस्यैव निरूपितत्वात् कथं शिवाद्वैतनिर्वाह इति चेन्न, तद्ग्रन्थस्य विभागपरामर्शदशावच्छेदेन भेदपरकत्वात्, अविभागपरामर्शदशायामभेदस्य जागरूकत्वात्, आद्यन्तकोट्योर्विचार्यमाणत्वेऽभेदानुभवस्य प्रसिद्धत्वात्। न च भेदाभेदयोर्विरोध इति वाच्यम्, वदतो व्याघातात्, भेदाभेदयोर्विरोध इति विवक्षोर्भेदाभेदज्ञाने विषयित्वसम्बन्धेन भेदाभेदाश्रयत्वस्य सत्त्वात्, अन्यथा विरोधस्फूर्तेरसम्भवात्। तस्माद् भेदाभेदयोर्विरोधो न सार्वत्रिक इति वक्तव्यम्।

अस्त्वेतद्विचारः। ''तदनन्यत्वमारम्भणशब्दादिभ्यः'' इति सूत्रार्थविचारे भेदाभेदयोर्विरोधपरिहारो निपुणतरं वक्ष्यते। तथा च पूर्वोक्तस्वाभाविकेच्छाशक्तिपरिकल्पितमायाप्रमातृजीवशिवभावरूपयोगस्य शासकत्वात् ''अभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति'' इत्यादिशास्त्रस्य आनन्दमयपरशिव एवोपास्यो न त्वितरः।।१९।।

एतावत्पर्यन्तं पञ्चकृत्यकारित्वेन परशिवलिङ्गस्यैव जीवोपास्यत्वमित्युक्तम्। अतः परं सूर्यादिदेवोपास्यत्वमपि तस्यैवेत्याह। तथा अक्ष्यादावपि शिवलिङ्गादिरूपेण स्थितस्यैवोपास्यत्वमित्याह च.......

## अन्तस्तद्धर्मोपदेशात्।।२०।।

ननु — ''य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी'' इत्यत्र, ''य एष अक्षिणि पुरुषो दृश्यते'' इत्यत्र चोपास्यवस्तुन आधारश्रवणात्, हिरण्यश्मश्रुरित्यादिना रूपश्रवणाच्च, ''अशब्दमस्पर्शमरूपमव्ययम्'' इत्यादिना परशिवस्य रूपाभावावगमात्, ''कस्मिन् प्रतिष्ठित इति स्वे महिम्नि'' इत्यादिना स्वमहिमप्रतिष्ठितस्य परशिवस्य अनाधारत्वस्य श्रुतत्वात्, साधार सरूप एव यः कश्चित् परशिवातिरिक्त उपास्य इति चेन्न, ''अन्तस्तद्धर्मोपदेशात्'' तस्य परशिवस्य धर्माणां ''स एष सर्वेभ्यः पाप्मभ्य उदितः'' इत्यत्र ''अयमात्मा अपहतपाप्मा'' इत्यादौ च ''सैवर्क् तत्साम'' इत्यादिना च सर्वपापाभावसर्वात्मकत्वादीनामन्तरुपदिश्यमानत्वात्, एतादृशधर्माणां परशिवासाधारणत्वात्, चक्षुरन्तःपुरुषस्य परशिवातिरिक्तस्य सर्वात्मकत्वासम्भवात्, आदित्यमण्डलान्तर्वर्तिनः परशिवातिरिक्तस्य कस्यचित् सर्वपापरहितत्वासम्भवात्, परशिवस्य सर्वकारणत्वात्, सर्वात्मकत्वात्, सर्वपापरहितत्वाच्च परशिवलिङ्गस्यैवोपास्यत्वमिति सिद्धम्। परशिवस्य सर्वशक्तित्वाद् भक्तानुग्रहार्थं घृतकाठिन्यन्यायेन लीलाविग्रहपरिग्रहसम्भवान्न श्रुत्युक्तरूपाद्युपन्यासोऽन्यमुपास्यं बोधयति।।२०।।

इतश्च यथा पूर्वं जीवस्य जीवोपास्यत्वं भेदव्यपदेशादित्यनेन सूत्रेण निराकृतम्, तथा सूर्यादीनामपि सूर्याद्युपास्यत्वं न सम्भवतीत्याह —

**भेदव्यपदेशाच्चान्यः ।।२१।।**

"य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः" इत्यादिनाऽऽदित्यादिशरीराभिमानिभ्यो देवेभ्योऽन्यस्य परशिवस्य सर्वान्तर्यामिणो व्यपदिश्यमानत्वात् तैरपि परशिव एवोपास्यः। अत्र देवैरप्युपास्यत्वं परशिवस्यैवेति सिद्धे किं वक्तव्यं जीवोपास्यत्वं तस्यैवेत्युपरिष्टादाशयः।।२१।।

ननु — "अस्य लोकस्य का गतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इत्यत्र आकाशशब्दस्य भूताकाशपरत्वात् तस्यैव लोकवेदयोः प्रसिद्धत्वाद् अवकाशदानेन भूतानामुत्पत्तिकारणत्वाच्च " खं ब्रह्म", "आकाश आत्मा" इत्यादौ आकाशस्यैव ब्रह्मत्वोपदेशात्, "आत्मनः आकाशः सम्भूतः" इत्याद्युक्तस्य आत्मजन्यत्वस्य आकाशस्य औपचारिकत्वाज्जगज्जन्मादिकारणं भूताकाश एवेति चेन्न, इत्यत्र हेतुमाह —

**आकाशस्तल्लिङ्गात् ।।२२।।**

अत्राकाशशब्दवाच्यः शिव एव भवति, न भूताकाशः, तल्लिङ्गात्= तस्य परशिवस्य जगज्जन्मादिकारणत्वादिलिङ्गात्, अचेतनभूताकाशे ईक्षणपूर्वकजगज्जन्मादिकारणत्वासम्भवात्, "आकाशाद्वायुः" इत्यादिश्रुतावप्याकाशाद्यनुप्रविष्ट-ईशानादिसद्योजातान्तपञ्चब्रह्मात्मकपरशिवकारणत्वस्य श्रूयमाणत्वात्। किञ्च, "सर्वाणि ह वा इमानि भूतानि" इत्यादिना उक्तजगदुभयकारणत्वस्य जडभूताकाशेऽसम्भवाद् आकाशशब्दवाच्यं परं ब्रह्मैव धार्यं ध्येयमिति सिद्धम्।।२२।।

प्राणस्यापि तत्र तत्र जगज्जन्मादिकारणत्वस्य श्रूयमाणत्वात् प्राणशब्दवाच्यत्वमपि ब्रह्मण इत्याह —

**अत एव प्राणः ।।२३।।**

"प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते" इति श्रुत्युक्तप्राणशब्दो न प्राणवायुपरः। अत एव "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्याद्युक्तसर्वभूतोद्गमनप्रवेशनलिङ्गाद् ब्रह्मैव प्राणशब्दवाच्यमित्यर्थः।।२३।।

ज्योति:शब्दवाच्यत्वमपि ब्रह्मण एवेत्याह —

## ज्योतिश्चरणाभिधानात् ।।२४।।

यद्यपि — ''अथ यदतः परो दिवो ज्योतिर्दीप्यते'' इत्यादिना ज्योति:पदवाच्यस्य द्युमर्यादत्वश्रवणात् सर्वगतस्य ब्रह्मणो द्युमर्यादत्वासम्भवाद् भौतिकज्योतिषः प्रसिद्धत्वाच्च सूर्यादेर्ज्योति:शब्दवाच्यत्वं भासते, तथापि चरणाभिधानात् ''पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'' इत्यस्मिन् पूर्ववाक्ये यत् त्रिपाद् ब्रह्म निर्दिष्टम्, तदेव ''यदतः परः'' इत्यत्र यच्छब्देन परामृश्यते, द्युसम्बन्धस्योभयत्र प्रतीतेर्ज्योति:शब्दो ब्रह्मण्यपि वर्तते। ''तद्देवा ज्योतिषां ज्योतिरायुर्होपासते'' इत्यादिश्रुतिभिः सर्वगतस्यापि ब्रह्मण उपासनार्थं द्युमर्यादत्वं न विरुध्यते। तस्माच्चरणाभिधानाद् ज्योति:शब्दवाच्यं परं ब्रह्म भवतीत्यर्थः।।२४।।

ननु — ''गायत्री वा इदं सर्वं भूतं यदिदं किञ्च'' इति पूर्ववाक्ये गायत्र्याख्यस्य छन्दसः सर्वात्मकत्वाभिधानात् तदेव ज्योति:शब्देनोपदिश्यते, इत्याशङ्क्य निराकरोति —

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम् ।।२५।।

पूर्ववाक्ये छन्दसोऽभिधानान्न परशिवः ज्योति:शब्दवाच्य इति चेन्न, तथा चेतोऽर्पणनिगदात्। गायत्र्याख्यछन्दोद्वारा चेतसि हृदयाम्भोजेऽर्पणं परमशिवलिङ्गस्य धारणमित्यर्थः। ''चेतोऽर्पणधारणं च हृदयाम्भोजमध्यमे'' इति नीलकण्ठशिवाचार्योक्तेस्तस्य धारणस्य ''गायत्री वा इदं सर्वम्'' इत्यनेन निगदात् कथनादित्यर्थः। तथा हि दर्शनम्, यथा संवर्गविद्यायाम् — '' ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्'' इत्युपक्रम्य ''सैषा विराट्''इत्यत्र संख्यासामान्यादर्थान्तरे प्रयुज्यमानस्य छन्दोभिधायिनः शब्दस्य दर्शनम्, तथा संख्यासामान्याद् गायत्रीशब्देन साक्षाद् ब्रह्मैव प्रतिपाद्यते, अक्षरावच्छिन्न-गायत्र्याख्यच्छन्दसः सर्वात्मकत्वादिधर्मासम्भवात्। सम्भवति च ''पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'' चतुष्पदो ब्रह्मणः षडक्षरैश्चतुर्भिः पादैश्चतुष्पदया गायत्र्या संख्यासादृश्यम्। अतो गायत्रीशब्देन परमशिव एव निर्दिष्ट इति तस्यैव सर्वात्मकत्वसिद्धेः।।२५।।

पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्मैवेत्याह —

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ।।२६।।**

भूतपृथिवीशरीरहृदयैः "सैषा षट्पदा षड्विधा गायत्री" इति व्यपदेशः केवलस्य छन्दसो नोपपद्यते, ब्रह्मणो भूतादिपादव्यपदेशस्योपपन्नत्वात्। पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्म, तदेव ज्योतिर्वाक्येऽपि द्युसम्बन्धात् प्रत्यभिज्ञायमानं परामृश्यते ।।२६।।

ननु — "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यत्र द्युसम्बन्धित्वप्रत्यभिज्ञानात्, "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यत्र दिवः-परत्वद्योतनात्, कथमुभयोर्वाक्ययोः परमेश्वरपरत्वम्, इत्याशङ्कायामाह —

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।।२७।।**

उपदेशस्य "त्रिपादस्यामृतं दिवि" इति सप्तम्यादौ द्यौरधिष्ठानत्वेन कथनस्य "यदतः परो दिवो ज्योतिः" इति वाक्ये दिवः परत्वस्य ज्योतिषः कथनस्य च भेदान्न यत् पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्म, तदेव ज्योतिर्वाक्ये प्रत्यभिज्ञायत इति चेन्न, उभयस्मिन् पञ्चम्यन्ते सप्तम्यन्ते च प्रत्यभिज्ञानस्य अविरोधात्। पूर्वापरमध्यपरामर्शविरोधाभावादित्यर्थः। यथा लोके सौधाग्रे मयूरः सौधाग्रात् परो मयूर इति। अतः परमेव ब्रह्म ज्योतिःशब्दवाच्यमिति सिद्धम्।।२७।।

"अत एव प्राणः" इति सूत्रेण प्राणशब्दस्य परशिवपरत्वमुक्तम्, तथाप्यनेकलिङ्गदर्शनाद् अनेकेषामुपास्यत्वं मा भूदित्याशयेन आह —

**प्राणस्तथानुगमात् ।।२८।।**

यद्यपि — "मामेव विजानीहि", "इदं शरीरं परिगृह्योत्थापयति", " न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति वाक्यत्रयेण देवेन्द्र-प्राण-जीव-लिङ्गानां निर्दिश्यमानत्वात् प्राणशब्दो मुख्यप्राणाद्यर्थपर इति ज्ञायते, तथापि प्राणो ब्रह्मैव; कुतः? तथानुगमात्, पौर्वापर्येण विचार्यमाणे वाक्ये ब्रह्मप्रतिपादने पदानां समन्वयस्य उपपन्नत्वात्, "यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्तं हिततमत्वं ब्रह्मप्राप्तेरन्यस्य नोपपद्यते, "तं मामायुरमृतमित्युपास्व", "स वा एष प्राण एव प्रज्ञानन्दोऽजरोऽमृतः" इत्याद्युक्तानन्दाजरामृतप्रज्ञात्मत्वादीनां परशिवातिरिक्तमुख्यप्राणादावसम्भवात् प्राणशब्दोऽत्र ब्रह्मपरक एव।।२८।।

पुनराशङ्क्य परिहरति —

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ।।२९।।**

न प्राणशब्दो परशिवपरः, कुतः? वक्तुरिन्द्रस्य आत्मोपदेशात्, "मामेव विजानीहि" इति प्रतर्दनं प्रति स्वात्मन उपदेशात्। "आनन्दोऽजरोऽमृतः" इत्याद्युपसंहारोक्तानन्दत्वादिधर्माणां तस्मिन्नेव देवताविशेषे कथञ्चिन्नेतव्यत्वात्, इति चेन्न, हि यस्मात्, अस्मिन् अध्याये अध्यात्मसम्बन्धभूमा परमशिवसम्बन्धबाहुल्यं लक्ष्यते, तस्मादित्यर्थः। तथा चादिमध्यावसानेषु परमशिवसम्बन्धस्यैव बाहुल्येन प्रतिपाद्यमानत्वाद् ब्रह्मण एव प्रथमतरं हिततमत्वोपन्यासेनोपक्रान्तत्वाच्च न देवताविशेषस्य विग्रहवतः प्राणशब्दपरत्वम्।।२९।।

ननु कथं तर्हि "मामेव विजानीहि" इति वक्तुरात्मोपदेश इत्यत्राह —

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।।३०।।**

वामदेववत्, यथा वामदेवः — "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति शास्त्रदृष्ट्या सर्वजगत्स्वरूपं परमेश्वरं पश्यन् "अहं मनुरभवं सूर्यश्च" इति सर्वात्मकत्वं स्वस्योपदिष्टवान्, तथा मामेव विजानीहीत्युपदेशः शिवयोगाभ्यासपाटवेन देवताविशेषस्य शिवभावमापन्नस्य "मामेव विजानीहि" इति स्वात्मनः सर्वात्मकत्वेनोपदेशो न विरुध्यते। "यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद्विजानाति" इति श्रुत्यनुसारेण भ्रमरकीटवच्छिवोपासनया शिवत्वापन्नभक्तानां वस्तुतः शिवस्वरूपेण सर्वस्य ज्ञायमानत्वात्, शिवातिरिक्तस्य कस्यचिद् गगनकुसुमायमानत्वात् सर्वं शिवमयं ज्ञात्वा मामेव विजानीहीत्युपदेशः।

किञ्च, कृष्णावतारेऽर्जुनं प्रति — "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः। ममैवांशो जीवलोको जीवभूतः सनातनः।।" इत्यादीनि यथा शिवात्मत्वदृष्ट्योपदिदेश, तद्वदिन्द्रोपदेशो न विरुध्यत इति भावः।।३०।।

"आनन्दोऽजरोऽमृतः" इत्याद्युपसंहारोक्तानन्दत्वाजरत्वामृतत्वादीनां धर्माणां परशिवासाधारणत्वाद् उपक्रान्तार्थजालस्य परशिवविषयकत्वेन सुदृढं प्रतिपादयितुमाह —

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।।३१।।**

जीवमुख्यप्राणलिङ्गात् ''वक्तारं विद्यात्'', ''प्राण एव प्रज्ञातेदं शरीरं परिगृह्य उत्थापयति'' इत्यत्र जीवमुख्यप्राणयोर्लिङ्गाद्धेतोर्जीवमुख्यप्राणावेव उपास्यौ न परशिव इति चेन्न, आश्रितत्वात्। ''न प्राणेनापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवति यस्मिन्नेतावुपाश्रितौ।।'' इति प्राणव्यापारस्यापि परमशिवाधीनत्वात्, यस्मिन्नेतावुपाश्रितावित्यनेन प्राणापानयोः परशिवाश्रितत्वोक्तत्वात्, ''नोपास्यौ प्रकृतिजीवौ'' इत्यत्र जीवाद्युपासनस्य निरस्तत्वाच्च। इह अस्मिन्नध्याये तद्योगात् तस्य परशिवस्य योगात्, तदसाधारणधर्मबाहुल्येन सम्बन्धात्, तस्यैव उपासात्रैविध्यात् हृदब्जद्वादशान्तभ्रूमध्यस्थानेषूपासनायाः परशिवोपासनस्य त्रैविध्यात् त्रिविधत्वस्य तत्र तत्र श्रूयमाणत्वात्, ''हृदब्जे वा द्वादशान्ते भ्रूमध्ये वाथवा शिरे। ध्यायेन्मुक्त्यै सदा देवं त्रिविधोपासनं स्मृतम्।।'' इति कारिकया नीलकण्ठशिवाचार्येण ''उपासात्रैविध्यात्'' इत्यस्य सूत्रघटकस्यार्थस्य संगृहीतत्वाद् निर्वाणमन्त्रिणा। प्राणधर्मेण प्रज्ञात्मधर्मेण स्वधर्मेण च उपासनाया यत्त्रिविधत्वं शङ्करभगवत्पादाचार्येण अथवेत्यादिग्रन्थेन अभिप्रेतमुक्तम्, तन्मूलविरुद्धमित्याभाति। अन्यस्मिन् अन्यधर्मावगाहिबुद्धेर्भ्रमत्ववद्, अन्योपाधिद्वयधर्मावगाहिन्या अन्यपरशिवोपासनाया भ्रमत्वापत्तेश्च। इष्टापत्तौ शुक्तौ रजतभ्रमानन्तरं रजतार्थिनो रजतप्राप्त्यभाववद् अनपेक्षितशुक्तिप्राप्तिवच्च मुमुक्षोः शिवभावप्राप्तिरूपमोक्षाभावप्रसङ्गः। शिवातिरिक्त-प्राणादेरुपासनस्य कुत्राप्यविधीयमानत्वाज्जन्मादिकारणत्वादिना स्वधर्मेण शिवस्यैवोपास्यत्वं सिद्धम्। जगज्जन्मादिकर्तृत्वानुमितसर्वज्ञत्वादिधर्मविषयकोपासनाया एव स्वशक्तिसङ्कोच-प्रयुक्तकिञ्चिज्ज्ञत्वादिनिवर्तकत्वात्। ''एषोऽन्यत्र तुटेः पातः प्रोक्तः सर्वज्ञतादिभाक्'' इति रहस्यस्तोत्ररीत्या जीवस्य तुटिपाते सर्वज्ञत्वसर्वकर्तृत्वसर्वेशत्वादिविषयकोपासनया तुटिपाते इत्यर्थः, सर्वज्ञत्वसर्वकर्तृत्वसर्वेशत्वादिभाग् जीवो भवति। एष च विषयो गुरूपदेशेनादरात् परीक्ष्यः। अत एवोक्तम् — ''यः सर्वज्ञः सर्ववित्'' इति य उक्तोपासनया सर्वज्ञः, स सर्ववित् सर्वसाक्षिसर्वाधिष्ठानरूपः शिव एवेत्यर्थः।

किञ्च, ''अहमन्नमहमन्नमहमन्नमहमन्नादोऽहमन्नादोऽहमन्नादः'' इति श्रुतिरपि शिवभक्ति-विजृम्भितशिवभावापन्नस्य सर्वात्मकशिवस्वरूपं व्यनक्ति। एषा रीतिरग्रे स्फुटीभविष्यति। जीव**प्राणधर्मे**णोपासनाया जीवत्वप्राणत्वापत्त्या तद्विषयकोपासनाया निष्प्रयोजनत्वात् **प्राणधर्मेण** प्रज्ञात्मधर्मेण चोपासनायास्त्रिविधत्वपूरणं विचारणीयम्। अतः पूर्वोक्त-नीलकण्ठशिवाचार्यादृतत्रैविध्यमेवोपासनायां वक्तव्यम्।

अथवा ''मामेव विजानीहि'', ''प्राणोऽस्मि प्रज्ञात्मा मामायुरमृतमित्युपास्व'' इति श्रुत्या परमशिवकलानुस्यूतबाह्यप्राणलिङ्गस्योपदिश्यमानत्वात् स्वार्चकभक्तानां प्राणनहेतुत्वात्, तस्यैव प्राणशब्दवाच्यत्वात्, अन्योपासनया किमित्याशङ्क्याह — ''जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्'' इति।

"यावदस्मिन् शरीरे प्राणो वसति तावदायुरिति", "प्राणो वै बलम्", "प्राणोऽस्मि प्रज्ञात्मा मामायुः" इत्यादिषु परिच्छिन्नजीवमुख्यप्राणलिङ्गस्य निर्देशात् सर्वव्यापकपरशिवोपासनं नेति चेन्न, इष्टापत्तेः। कुतः? उपासनात्रैविध्यात्, इष्ट-प्राण-भावसंज्ञकपरशिव-ब्रह्मोपासनात्रयस्याङ्गीकृतत्वात्। इह अस्मिन् वाक्ये, तद्योगात् तस्य उपासनात्रयस्य स्थूलारुन्धतीन्यायेन करतलामलकवत् स्वशक्तिप्रसरावच्छिन्नषट्स्थलपरिपूर्ण-सच्चिदानन्दपरशिवसाक्षात्कारसाधनत्वेन सम्बन्धात्, अत एव तस्य आश्रितत्वात्, उपयुक्तत्वादित्यर्थः। प्राणोऽस्मीत्यादिवाक्ये स्थूलशरीरावच्छिन्नमुख्येष्टलिङ्गधर्मबाहुल्याद् इष्टलिङ्गोपासनम्, मध्ये "एष एव साधुकर्म कारयति" इति प्राणलिङ्गधर्मबाहुल्यस्य सर्वकर्मकारयितृत्वादेः श्रवणात् प्राणलिङ्गोपासनम्, उपसंहारे "रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता" इत्यादिना भावलिङ्गधर्मभूयस्त्वावगमाद् भावलिङ्गोपासनं चैतत्त्रय-स्योपक्रमोपसंहारमध्यवाक्यैर्विधीयमानत्वात् तद्वाक्यानां परमशिवान्यपरकत्वे पूर्वापरमध्यवाक्यपरामर्शविरोधप्रसङ्गात्, आनन्दचिदात्मनां इष्ट-प्राण-भावलिङ्गा-नामुपासनात्रयस्य मुख्यत्वेनानुभवसूत्रादौ निगदितत्वात्, इष्ट-प्राण-भावलिङ्गोपासनात्रयमेव शिवप्रसादसंप्राप्तशिवज्ञानसम्पन्नबादरायणेन उपासात्रैविध्यादित्यनेन सूचितमिति वक्तुं शक्यते। "नोपास्यौ प्रकृतिजीवौ" इत्यादौ जीवाद्युपासनस्य निषिद्धत्वात्, निर्विशेषस्य ब्रह्मण उपासनासम्भवात्।

किञ्च — "तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादौ पञ्चम्यन्तपदत्रयेण यथाक्रमं प्राणलिङ्ग -इष्टलिङ्ग-भावलिङ्गोपासनात्रयस्य स्पष्टमुक्तत्वात्, अन्यत्र प्राणव्यापारजीवयोर्ब्रह्माधीनत्वावगमात्, धारणार्चनार्पणात्मकोपासनायोग्यत्वात्, जीवसकलाभीष्टप्रदायकत्वाच्च जीवमुख्यत्वं स्वेष्टलिङ्गस्यैव, जीवमुख्येष्टशब्दयोर्लिङ्गब्रह्मणोरिव पर्यायत्वात्। उक्तं च शङ्करसंहितायां जीवस्य प्राणलिङ्गमुख्यत्वम् — "शिष्यदेहे ततः शक्तिपातं कृत्वा स्वविद्यया। पीठस्थशिवलिङ्गे तु शिष्यपाणौ निधाय च।। लिङ्गं संस्थाप्य तत्प्राणे प्राणलिङ्गं भवेत्ततः। दत्वा शिष्याय तल्लिङ्गं श्रद्धाभक्तियुताय सः।। न त्यज प्राणलिङ्गं त्वं यावज्जीवं प्रतिज्ञया। पुनर्भवं न ते वत्स विद्यते मातृयोनिषु।।" इति। उक्तं च सिद्धान्तागमेऽपि — "शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत्। तल्लिङ्गं तु स तत्प्राणे स्थापयेदेकभावतः।। एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत्। प्राणवद्धारणीयं तु प्राणलिङ्गमिदं तव।। कदाचित् कुत्रचिद्वापि न वियोजय देहतः।।" इति। अत एव शिवेनापि — "शरीरवृत्तिर्व्रतम्" इति सूत्रितम्। तेन शरीरस्य स्थूलसूक्ष्मकारणापर-पर्यायत्यागाङ्ग-भोगाङ्ग-योगाङ्गत्रयस्य वृत्तिर्यावत्पर्यन्तं वर्तनं तावत्पर्यन्तं व्रतं

विराड्ढिरण्यगर्भेश्वरापरपर्याय-इष्ट-प्राण-भावलिङ्गत्रयधारणात्मकं व्रतम् इत्यर्थो लभ्यते। तथा च सूत्रघटकोपासात्रैविध्यादित्यनेन इष्ट-प्राण-भावोपासनात्रयमेव कथितम्, ''यस्य लिङ्गार्चनेनैव व्यासः सर्वार्थवित्तमः'' इति सूतसंहितोक्तेः, शिवसूत्रशिवभक्तव्याससूत्रयोरेकार्थत्वस्य वक्तव्यत्वावश्यकत्वात्। तस्य शिवभक्तत्वे शिवपुराणम्, काश्यां तत्स्थापितशिवलिङ्गमपि निदर्शनमिति बोध्यम्।

किञ्च, श्रुत्यन्तरेऽपि परमेश्वरस्य लिङ्गत्रयात्मकत्वं स्पष्टमुपदिष्टम्। ''सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी च भगवान् तस्मात् सर्वगतः शिवः।।'', ''इष्टमूर्जं तपसामनुयच्छति सर्वदा'', ''तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः'', ''भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्। कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम्।।'' इत्यादिश्रुतिशतेन इष्टप्राणभावलिङ्गत्रयोपासनात्मकधारणस्य शरीरत्रयवर्तनपर्यन्तं स्थायित्वाभ्युपगमात् पूर्वोक्ततादृशसूत्रार्थस्य युक्तत्वम्। ''प्राणोऽस्मि प्रज्ञात्मा'' इत्याद्युपक्रमोपसंहारमध्यवाक्यानां परमशिवैकपरत्वनिर्णयस्योचिततरत्वात्, इतरेषां मुक्तिप्रदायकत्वाभावात्, परमशिवप्रकरणत्वाच्च प्राणशब्दोऽत्र परशिवब्रह्मणि वर्तत इति राद्धान्तः। न चास्यापि नीलकण्ठशिवाचार्यानभिप्रेतत्वमिति वाच्यम्, ''प्राणादप्यधिकं लिङ्गं यस्मात् श्रेयः परं भवेत्। तत्प्राणलिङ्गं मोक्षार्थी विदध्याद् हृदयाम्बुजे।।'' इत्यनेन एतत्सूत्रव्याख्यानावसरे तदुक्तश्लोकेन तदभ्युपगतत्वनिर्णयात्।

अस्मिन् पादे मोक्षप्रयोजनाय शक्तिविशिष्टं लिङ्गरूपं ब्रह्म प्रथमसूत्रेणोपास्यत्वेनोपदिष्टम्, उपासनाया उपास्यनिष्ठकिञ्चिद्गुणविषयकत्वनियमात्। द्वितीयसूत्रेण प्रथमोद्दिष्टस्य कानिचिदसाधारणगुणानि दर्शितानि। तृतीयचतुर्थसूत्राभ्यां शास्त्रस्य यत्किञ्चित् तन्माहात्म्यप्रकाशकसमस्तवेदान्तानामुद्दिष्टब्रह्मणि समन्वयो दर्शितः। ''ईक्षतेर्नाशब्दम्'' इत्यादिना ''श्रुतत्वाच्च'' इत्यन्तेन सूत्रेण प्रधाने तल्लक्षणं नातिव्याप्तमिति दर्शितम्। ''आनन्दमयोऽभ्यासात्'' इत्यादिना ''शास्त्रदृष्ट्या तूपदेशो वामदेववत्'' इत्यन्तेन सूत्रेण परशिवातिरिक्तेषु तल्लक्षणाभावात् तेषां नोपास्यत्वमित्युक्तम्। ''जीवमुख्यप्राणलिङ्गान्नेति'' इति सूत्रेण प्रथमसूत्रोपक्रान्तपरशिवलिङ्गोपासनस्येष्टप्राणभावलिङ्गरूपावगाहितया त्रैविध्यमुक्तमिति सूत्रतात्पर्यपर्यालोचनेन प्रस्फुटं स्फुरति।।३१।।

**।। इति श्रीमच्छिवाद्वैतप्रतिपादिकायां शाङ्कर्यां वृत्तौ**
**समन्वयाध्यायस्य प्रथमः पादः समाप्तः ।।**



## प्रथमाध्याये द्वितीयः पादः

अस्मिन् प्रथमसमन्वयाध्याये परस्यैवामिततेजसो लिङ्गस्य सर्ववेदान्तानां प्रतिपाद्यत्वेन समन्वयस्य वक्तव्यत्वादस्मिन् पादेऽपि षट्स्थलात्मकपरमशिवलिङ्गोपासनमेव प्राधान्येन विचार्यते।

ननु "स क्रतुं कुर्वीत मनोमयः प्राणशरीरः" इत्यत्र मनोमयत्वादिधर्मविशिष्ट-त्वाज्जीवस्यैवोपास्यत्वमिति चेन्न —

### सर्वत्र प्रसिद्धोपदेशात् ।।१।।

"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत", "अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति स क्रतुं कुर्वीत। मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाश आत्मा सर्वकर्ता सर्वकामः" इत्यत्रोपक्रमे सर्वत्र प्रसिद्ध्या सर्वात्मकपरमेश्वरस्योपासनाया विधीयमानत्वात् कथं जीवस्योपास्यत्वेनाशङ्का? इति चेन्न, सर्वं खल्विदमिति वाक्येनोपादानोपादेययोरभेदात्, इदं सर्वं ब्रह्मैवेति ब्रह्मत्वेनोपासनस्य निर्दिष्टत्वात्, तदन्तर्गताजडजीवस्यापि ब्रह्मत्वेनोपासनायाः प्राप्तत्वात्, तस्यैव मनआदिभिः सम्बन्धात्, परस्य तदभावात्, "अप्राणो ह्यमनाः शुभ्रः" इति श्रुतेस्तस्योपास्यत्वशङ्का सम्भवति, अतस्तन्निवारणार्थं सर्वत्र प्रसिद्धोपदेशादिति सूत्रमुक्तम्। तथा चोपक्रमवाक्यनिर्दिष्टोपास्येष्टलिङ्गात्मकविराज उपासनायां शान्तोऽर्थाद् रागादिदोष-रहितो भवति।

एवं च "सर्वं खल्विदं ब्रह्म" इति वाक्येन इष्टलिङ्गोपासनमुक्तम्। "मनोमयः प्राणशरीरः" इत्यनेन तु प्राणलिङ्गोपासनम्, प्राणाः शरीरं यस्य सः प्राणशरीरः। प्राणशब्देन प्राणोपलक्षितसूक्ष्मशरीरात्मकभागाङ्गमित्यर्थः। तच्छरीरत्वं तदभिमानिनो हिरण्यगर्भात्मकप्राणलिङ्गस्य, तस्य मनोग्राह्यत्वात्, मनःप्राचुर्यार्थकमनोमयत्वमित्यर्थः।

ननु परमेश्वरस्य "अप्राणो ह्यमनाः शुभ्रः" इति श्रुत्या "यन्मनसा न मनुते" इत्यादिश्रुत्या च मनःसम्बन्धत्वाभावावगमात् कथं तस्य मनोमयत्वम्? तादृशश्रुतीनां "भावग्राह्यमनीडाख्यम्" इत्यादिश्रुतिप्रसिद्धभावलिङ्गपरकत्वात्; "मनसैवानुद्रष्टव्यम्", "मनसैवेदमवाप्तव्यम्", "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः",

"बुद्ध्यालोकनसाध्येऽस्मिन् वस्तुन्यस्तमिता यदि। बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव।।" इत्यादिश्रुतिस्मृतीनां मनोग्राह्यप्राणलिङ्गपरकत्वात्। "मनोमयः प्राणशरीरः" इत्यत्रापि प्राणलिङ्गमेवेष्टलिङ्गोपासनाधिकफलायोपास्यत्वेनोपदिष्टम्। अग्रे "भारूपः सत्यसङ्कल्पः" इत्यादिवाक्येन तदधिकफलाय कारणशरीरयोगाङ्गाभिमानिभावलिङ्गोपासनमपि निर्दिष्टम्। तस्मादिष्टादिरूपेण जीवमुख्येतिसूत्रप्रतिपादितपरशिवब्रह्मोपासनस्य सिद्धत्वान्न जीवस्योपास्यत्वम् । "सर्वं खल्विदं ब्रह्म" इत्यादिना तत्तल्लिङ्गोपासनाया एव सिद्धत्वात् तद्धारणानौचित्यमिति चेन्न, समाधिशब्दितोपासनायास्तद्धारणं विनाऽनुपपत्तेर्बाह्याभ्यन्तरोपास्यस्वरूपधारणाभावे तदुपासनाया असम्भवात्।

ननु प्राणाधिकरणेऽस्य सिद्धत्वात् पुनः किमिति चेन्न, प्राणाधिकरणे त्रिविधलिङ्गोपासनाविधिरेव साधितः, अत्र पुनः स्पष्टार्थमीक्षत्यधिकरणे प्रधानजगत्कारणत्वं निरस्तमपि "चमसवदविशेषात्" इत्यादिना पुनर्निराकरणवद् बाह्यलिङ्गधारणं पुनर्निर्दिश्यते।

श्रुत्यन्तरेऽपि — "दहरं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थम्। तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्।।" इत्यनेन ज्योतिर्लिङ्गानुसन्धानमिति निर्दिश्य, "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः।।" इत्यादिनाऽनुसन्धेयस्वरूपमुक्त्वा, "निधनपतये नमः" इत्यादिना लिङ्गस्य सर्वात्मकत्वमुपदिश्य, "एतत्सोमस्य सूर्यस्य सर्वलिङ्गाङ्गं स्थापयति पाणिमन्त्रं पवित्रम्" इत्यनेनेष्टलिङ्गधारणं विधीयते। उक्तं च लैङ्गे –- "वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च। ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम्।।" इत्युपक्रम्य "यजुरप्याह सर्वं वै लिङ्गं स्थापयतीति च। तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः।। पाणौ लिङ्गं विनिक्षिप्य दीक्षाकाले गुरुः शिवम्। येन स्मरति तन्मन्त्रं पाणिमन्त्रं वदन्ति हि।। पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात्। पवित्रीकरणात् पुंसां पवित्रमिति कथ्यते।। तस्मात् सर्वेषु कालेषु धारयेल्लिङ्गमुत्तमम्। गच्छन् तिष्ठन् स्वपन् जाग्रदुन्मिषन्निमिषन्नपि।। शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत्। लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोहरम्।। अर्चयेद्गन्धपुष्पाद्यैः करपीठे समाहितः।" इत्यन्तम् ।

अपि च, तत्स्वरूपं सिद्धान्तशिखोपनिषदि — "गणवंशश्चेशानतः स्यात्" इत्यनेन गणवंशानामीशानमुखाविर्भूतत्वं प्रदर्श्य तेषां न सूतकादिस्पर्श इति — वक्तुम् "अत्याश्रमित्वाद् गणवंशजानां लिङ्गाङ्गसङ्गिनां तथैव न सूतकं वाप्यशुचित्वम्। एषां गच्छंस्तिष्ठन् निमिषन्नुन्मिषन् वा स्वपन् जाग्रद् लिङ्गधारी शुचिः स्यात्।" इति निर्दिष्टम्।

अथ च तत्रैव — "न तत्रोच्छिष्टं भुञ्जते शुद्धदेही। शीर्षे कण्ठे वक्षसि कुक्षिदेशे नाभौ हस्ते सर्वदा प्राणलिङ्गं धार्यं यथासम्प्रदायं गुरोर्विदित्वा हृदये मुख्यमुक्तम्।" इत्यादिना बाह्यलिङ्गधारणं लिङ्गधारिणः सूतकाभाववत्त्वं च त्रैकालिकमुक्तम्, तत्र जाग्रत्काले सूतकाभावस्याव्याप्यवृत्तित्वे मानाभावात् पूर्वोक्तश्रुतिविरोधाच्च तच्छ्रुत्या सूतकाभावस्य व्याप्यवृत्तित्वावगमात्। दीक्षया प्रबलमलत्रयस्यैवोद्ध्वस्तत्वे सूतकसद्भावः कथं सम्भवतीति विचारणीयम्।

किञ्च, शैवदीक्षानन्तरं प्रेतत्वजीवत्वसत्त्वे तस्या आनर्थक्यम्, तदभावे कस्य दोषस्पर्श इति प्रष्टव्यो सूतकसद्भाववादी। केचिन्मूढाः शिवदीक्षानन्तरं प्रेतत्वजीवत्वाभावेऽपि शिवागमेषु शैवानां स्ववर्णाश्रमोचितपूर्वापरकर्मकर्तव्यताया विधेयत्वात्, अकरणे प्रत्यवायदर्शनाच्च विधिविहितयावत्कर्मानुष्ठानं कर्तव्यमेवेति वदन्ति। तेषामिदं मौढ्यम्, विधिविहितयावत्कर्मानुष्ठानस्य ब्रह्मणाप्यशक्यत्वात्, "नहि कर्मणि कर्मान्तरारम्भः" इति न्यायविरोधात्। प्रयोजनाभावे मन्दस्यापि प्रवृत्त्यदर्शनात्, लिङ्गधारिणः प्रयोजनाभावस्य स्वप्रयोजनाभावेऽपीत्यादिना ग्रन्थेन तैरेव स्वीकृतत्वात्। सनकादेर्यावत्कर्मानुष्ठानराहित्य-कृतावैदिकत्वापत्तेः, "कर्मणो गहना गतिः", "यावतां समनुष्ठानं सप्तसागरशोषणम्" इति यावत्कर्मानुवर्तनस्य कैरप्यशक्यत्वात्, कर्मणां सङ्कल्पाधीनत्वेन सङ्कल्पविरोधे प्रायश्चित्तविधानात् सङ्कल्पिताश्रयेणाश्रमधर्मोऽनुष्ठेयः। यथा ब्रह्मचारी गृहस्थाश्रमस्वीकाराभावे तद्धर्मानपि नार्हति, गृही वनस्थाश्रमधर्मान्, वनस्थो यतिधर्मान्, तथा अत्याश्रमी वीरशैवो नाश्रमधर्मानर्हति। विभूत्यादींस्तु अत्याश्रमधर्मान् अर्हति, "धर्माननुतिष्ठेत" इत्यस्य स्वस्वाश्रमविहितधर्मविधायकत्वात्, तादृशधर्मानुष्ठातुरेव चित्तनैर्मल्यद्वारा ब्रह्मविचारार्हत्वाद् नोपनयनाद्यग्निष्टोमादिधर्मानुवर्तनापेक्षा। एतेन शैवदीक्षितानां कर्मकरणे प्रयोजनाभावेऽपि शिवाज्ञापालनार्थमवश्यं कर्तव्यमेवेति तैरुक्तमपि प्रत्युक्तम्।

न च वेदबोधितकर्तव्यताज्ञानाद् उपनयनाग्निष्टोमादौ प्रवृत्तिः संभवतीति वाच्यम्, स्वप्रयोजनसाधनत्वाभावे प्रवृत्तेरसम्भवात्। न तु वेदबोधितकर्तव्यताज्ञानात्प्रवृत्तिः सम्भवति, स्वेष्टसाधनत्वमविज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवादिति श्रीविश्वनाथपञ्चाननभट्टाचार्येणाप्युक्तम्। बसवेश्वरेणापि शिवदीक्षासम्पन्नस्योपनयनाग्नि-ष्टोमादिकर्मानुवर्तने प्रयोजनाभावात्, अङ्गीकृतकर्मपरित्यागापेक्षयाऽनङ्गीकरणं वरमित्या-दिना कर्मोपनयनं बहुधा निरस्तम्। अस्त्वेतत् तत्र तत्र स्फुटीभविष्यति। प्रकृतमनुसरामः। सर्वत्र श्रुत्यागमपुराणादिषु परमशिवलिङ्गस्य धार्यत्वेनोपास्यत्वेन च प्रसिद्धत्वात्र जीवस्योपास्यत्वम्।।१।।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह —

## विवक्षितगुणोपपत्तेश्च ।।२।।

विवक्षितानां वक्तुमिच्छाविषयीभूतानां गुणानां ''सत्यसङ्कल्प आकाश आत्मा सर्वकर्ता सर्वकामः'' इत्यादिश्रुत्युक्तसत्यसङ्कल्पत्वव्यापकत्वसर्वकर्तृत्वसर्वकामत्वादीनामुपपत्तेर्ब्रह्मोपासनाविषयत्वेनैवोपपन्नत्वादिति सूत्रार्थः।

नन्वपौरुषेये वेदे वक्तुरभावाद् इच्छार्थः कथं सम्भवतीति चेन्न, प्रपञ्चमात्रं प्रति बहु स्यामितीच्छाया विमर्शशक्तेः कारणत्वेन नामप्रपञ्चं प्रत्यपि कारणत्वात्, ''तस्माद्यज्ञात्सर्वहुतः, ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे'' इत्यादिश्रुतेः, ''वाचा विरूपनित्यया'' इत्यादिवेदनित्यत्वबोधकानां पूर्वसाम्येन प्रवाहरूपेण स्वेच्छयाऽऽविर्भावमात्रपरकत्वात्, वेदस्य जीवाजन्यत्वमात्रेणाप्यपौरुषेयत्वसम्भवात्। तथा चोक्तमागमरहस्यस्तोत्रे — ''साक्षाद्भवान् यदि विधाय न मूर्तिमाद्यां तत्त्वं निजं तदवदिष्यदतोऽतिगुह्यम्। नाज्ञास्यत त्रिभुवनं ध्रुवमन्धमूककल्पं समस्तमसमञ्जसतामयास्यत्।।'' इति । उक्तं च षाड्गुण्यविवेकेऽपि —''साक्षात् त्वमेव वा शास्त्रं त्वदीयैव हि सा मतिः। शब्दद्वारेण संक्रम्य संस्करोत्यधिकारिणः।।'' इति शास्तृशास्त्रयोरुपादेयोपादानयोस्तादात्म्यम्। तथा च मुमुक्षोरुपासनायां सर्वकर्तृत्वादीनामेव परशिवगुणानां विवक्षितत्वात्, किञ्चित्कर्तृत्वादीनां जीवगुणानामविवक्षितत्वात्, अन्यत्रापि — ''ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः।।'' इत्यादिना शिवासाधारणधर्मश्रवणाच्च तस्यैव धार्यत्वं ध्येयत्वमिति सिद्धम् ।।२।।

परशिवोपासनायां विवक्षितगुणानामुपपत्तिमुक्त्वा किञ्चित्कर्तृत्वादिविशिष्टस्योपास्यत्वे तेषामनुपपत्तिमाह —

## अनुपपत्तेस्तु न शारीरः ।।३।।

तुशब्दोऽवधारणार्थः। परशिवस्यैवोपास्यत्वं न शारीरस्य किञ्चित्कर्तुः, अनुपपत्तेः सर्वकर्तृत्वादीनां विवक्षितानामनुपपत्तेरित्यर्थः।।३।।

इतश्च न तस्योपास्यत्वमित्याह —

## कर्मकर्तृव्यपदेशाच्च ।।४।।

''एतमितः प्रेत्य अभिसम्भवितास्मि'' इत्यत्र शिवोपासनानन्तरं शरीरपातादूर्ध्वं शिवस्य कर्मत्वेनेतरस्य कर्तृत्वेन प्राप्तव्यप्राप्तृभावस्य व्यपदेशात् कथनादित्यर्थः।।४।।

किञ्च, तस्यैवोपास्यत्वमित्याह —

## शब्दविशेषात् ।।५।।

"अयमन्तरात्मनि पुरुषो हिरण्मयः" इत्यत्र शारीरविधायकसप्तम्यन्तपदात् पुरुष इति उपास्याभिधायकप्रथमान्तपदस्य विशेषाद् भेदादित्यर्थः।।५।।

इतश्च शिवस्यैवोपास्यत्वे स्मृतिरपि प्रमाणमस्तीत्याह —

## स्मृतेश्च ।।६।।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।।" इत्यत्र परशिवस्यैव प्राणलिङ्गरूपेण सर्वप्राणिहृदयान्तर्वर्तित्वावगमात्, स्वहृदये स्वस्योपास्यत्वासम्भवात् शिवस्यैव प्राणलिङ्गरूपेण धार्यत्वं ध्येयत्वं च सम्भवति। श्रुतावपि — "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यनेन हार्दाकाशमध्यवर्तिनः प्राणलिङ्गस्यानुसन्धानमुक्तम्। तच्च वीरशैवानामिष्टलिङ्गार्चनादिरूपं वस्त्वेकमपि बहिर्लक्ष्यान्तर्लक्ष्यभेदेन द्विविधम्। तथा चात्र प्राणलिङ्गधारणध्यानमेवोक्तम्, न तु बाह्येष्टलिङ्गधारणमिति न भ्रमितव्यम् ; अन्याश्च स्मृतयोऽपि बाह्येष्टलिङ्गधारणे प्रमाणानि सन्ति। मनुस्मृतौ — "शिवध्यानपरो भूत्वा शिवलिङ्गाङ्गसंयुतः। शिवेतरपरित्यागी ध्यानयोगी स उच्यते।।" इति ध्यानयोगिनिरूपणे। उक्तं च तत्रैव — "अन्तर्धारयितुं लिङ्गमशक्तः शक्त एव हि। बाह्यं च धारयेल्लिङ्गं तद्रूपमिति निश्चयात्।।" इति शङ्खस्मृतौ च — "कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्। मानवः शिवयोगेन शिवो भवति सर्वदा।। वामहस्तस्थितं लिङ्गं सावधानेन पूजयेत्। मस्तके हृदये कण्ठे धारयेत् सर्वदा द्विजः।।" पाराशर्यस्मृतौ — "काश्यां मृतानां जन्तूनां यतीनां लिङ्गधारिणाम्। ब्रह्मत्वमेव भवति प्रेतत्वं नहि विद्यते।। शैवं लिङ्गार्चनं यस्य यस्य चाग्निपरिग्रहः। वानप्रस्थयतीनां च शरीरे नास्ति सूतकम्।।" सिद्धान्तागमे — "श्रुतिस्मृतिपुराणेषु वैदिकानां वरानने। लिङ्गधारणमाख्यातं सर्वसिद्धिप्रदायकम्।।"

ननु वीरशैवधर्मप्रतिपादकानां श्रुत्यागमादीनां षडङ्गषड्लिङ्गस्थलानामुत्तरोत्तरधर्माचरणस्य पूर्वपूर्वधर्माचरणानन्तर्यात् क्रमिकतया तादृशधर्माचरणस्य कालहस्ति-श्रीशैलादिदेशस्थिततन्तुमययज्ञोपवीतधारणलिङ्गधारणादिवैदिकतान्त्रिकधर्म-समुच्चयानुष्ठानपराराध्ये विहितत्वेन नेतुं शक्यत्वाद् आराध्येतरकेवलवीरशैवप्रतिपादकत्वं कथमिति चेन्न, "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्" इति

श्वेताश्वतरोपनिषदि, "अत्याश्रमी सर्वदा सकृद्वा जपेत्" इति कैवल्योपनिषदि च श्रूयमाणत्वादत्याश्रमिशब्दस्य "ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। अतिवर्णाश्रमी चेति क्रमाच्छ्रेष्ठा विचक्षणाः।। अतिवर्णाश्रमी साक्षाद्गुरूणां गुरुरुच्यते। यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात्।।" इत्यादिभिरतिवर्णाश्रमिणः श्रेष्ठत्वावगमात्, अतिवर्णाश्रमादिशब्दानां वर्णाश्रमाचरणधर्मशीलेषु वृत्त्यभावात्, पञ्चमाश्रमवतां वीरशैवब्राह्मणानां परकत्वौचित्यात्, लिङ्गोपनिषदि — "चतुर्थाश्रमसंन्यासः पञ्चमो लिङ्गधारणम्" इत्युक्तत्वात् वीरशैवानां लिङ्गधारिणां पञ्चमाश्रमवत्त्वं सिद्धम्।

नन्वतिवर्णाश्रमाचारादिशब्दानां प्रतियोगिप्रसक्तिसापेक्षाणां प्रतियोगिसम्बन्धं विना कृतेष्वाराध्यव्यतिरिक्तेषु वृत्तिः कथमुपपद्यते? इति चेन्न, स्वरूपसिद्धान्तोपनिषदि "गणवंशश्चेशानतः स्यात्", "अत्याश्रमित्वाद्गणवंशजानां लिङ्गाङ्गसङ्गिनाम्", वेदान्तसारोपनिषदि च —"ईशानकास्याद्गणवंशजानां लिङ्गाङ्गशोभा मोक्षमार्गैकनिष्ठाः" इत्युक्तत्वाच्च, "अतिवर्णाश्रमाचाराः सम्भवन्त्यूर्ध्ववक्त्रतः। ते वै साक्षान्महादेवे मोदन्ते ह्यागमेषु च।।" इत्याद्युक्तत्वाच्चातिवर्णाश्रमादिशब्दानां रूढ्या वीरशैवानां वाचकत्वात्। न चात्याश्रमिशब्दः कृताश्रमधर्माचरणेषु वर्तते। न चोक्तं प्रतियोगिप्रसक्तिसापेक्ष-काणामत्याश्रमादिशब्दानामाराध्यव्यतिरिक्तेषु वृत्तिर्न सम्भवतीति, अपहतपाप्मादिशब्दानां ब्रह्मप्रतियोगिकानां ब्रह्मणि पापासम्भवात् प्रवृत्तेरसम्भवापत्तेः, योगाद्रूढेर्बलीयस्त्वाद् अत्याश्रमादिशब्दानां वीरशैवपरकत्वमेव, वर्णाश्रमधर्मवतामाराध्यविप्राणा-मत्याश्रमिशब्दाभिधेयत्वायोग्यत्वात् परमेश्वरपञ्चमुखसम्भूतप्रमथगणनायकघण्टाकर्ण-गजकर्णरेणुकदारुकगोत्रजातानां केवलातिवर्णाश्रमधर्मानुष्ठायिनां केवलवीरशैवानामेव उक्तश्रुत्यागमपुराणेष्वत्याश्रमिशब्दप्रतिपादनौचित्यात्।

न च प्रमथानां परमेश्वरपञ्चमुखसम्भूतानामत्यन्तरङ्गाणां प्राकृतमनुष्यवत् प्राकृतस्त्रीपरिग्रहाभावात् कथमेतेषामाधुनिकानां वीरशैवानां तद्वंशजातत्वम्? तथापि यद्यस्ति तर्हि आराध्यविप्राणामपि तद्वंशजत्वमस्तु? इति वाच्यम्, "द्वारापोपस्पृशाय द्वारापाय स्वाहा द्वाराप्युपस्पृशे द्वाराप्यै स्वाहेति" ईशानबल्याख्यकर्मणि द्वारापशब्दवाच्यनन्दिकेश्वरस्य तत्पत्न्याश्चेशादेव्याः पुराणादिषु प्रसिद्धाया विद्यमानत्वेन भक्तानुग्रहार्थं परमेश्वरस्य किरातरूपादिधारणवत् शिवदीक्षया प्राकृतांशं तिरोभूय स्त्रीपरिग्रहसम्भवात्, तद्वंशजत्वस्यापि केवलानां वीरशैवानां सम्भवात्, आराध्यविप्राणां सर्वथा तद्वंशजत्वस्यानुचितत्वात्, वीरशैवधर्माचरणाभिमाने तद्वंशजत्वमस्तीत्युच्येत यदि, तर्हि भारद्वाज-अगस्त्य-अङ्गिरस-विश्वामित्र-भार्गव-वसिष्ठादिगोत्रजन्यत्वं न स्यात्।

न चेष्टापत्तिः, वृश्चिकभयात् पलायमानस्य आशीविषमुखनिपतनमिव ब्राह्मणत्वस्यापि भङ्गः स्यात्। न च ऋषिगणोभयवंशजत्वम-स्माकमाराध्यविप्राणां सम्भवतीति वाच्यम्, उत्पत्त्या उभयवंशजत्वमिति चेत्, "गर्दभेन सम्भवति तस्माद्गर्दभो द्विरेता" इति श्रुत्या गार्दभवदेकस्योभयवीर्योत्पत्तौ अत्यन्तलोकहास्यता स्यात्। शिष्यसम्प्रदायेनेति चेत्, तादृशसम्प्रदायस्य गौणतया चतुर्थवर्णस्यापि सम्भवात्। वीरशैवानां गणवंशजत्वाद-त्याश्रमिशब्दवाच्यत्वेन तदनुष्ठीयमानाष्टावरणपञ्चाचारधर्माणां ब्रह्मविद्याङ्गत्वम्। न चोपनयनसंस्काराभावात् तदनुष्ठितधर्माणामश्रौतत्वात् तदनुष्ठायिनां ब्रह्मविद्याधिकारत्वाभावात् "संस्कारपरामर्शात्तदभावाभिलापाच्च" इति सूत्रे ब्रह्मक्षत्रिय-वैश्यानामुपनयनसंस्कारविशिष्टत्वाद् ब्रह्मविद्याधिकारः, न शूद्राणामित्युपनयनासंस्कृतानां ब्रह्मविद्याधिकारस्य निषिद्धत्वादिति वाच्यम्, शिवदीक्षाया एवोपनयनस्थानीयत्वात् शिवदीक्षासंस्कृतानां तत्सूत्रे ब्रह्मविद्याधिकारस्य विहितत्वात्। एतदप्यपशूद्राधिकरणे स्पुटीभविष्यति।

ननु शिवदीक्षाया उपनयनस्थानीयत्वे "यज्ञोपवीतं परमं पवित्रम्" इत्यादिश्रुत्युक्त-यज्ञोपवीतस्याप्यावश्यकत्वात् तदभावान्न तत्स्थानीयत्वमिति चेन्न, "यज्ञो वै विष्णुः" इति श्रुत्या विष्णोर्यज्ञत्वावगमात्, ईश्वरशक्तेरेव पुंभावं स्वीकृत्य विष्णुरूपत्वात्, "विष्णुवल्लभाय नमः" इत्युक्तत्वाच्च यज्ञेनोपवीतमविनाभावेन सम्बद्धम्, शिवलिङ्गमित्यर्थः, शिवलिङ्गैकवाचकपरमपवित्रशब्दसमभिव्याहृतयज्ञो-पवीतशब्दस्य लिङ्गवाचकत्वौचित्याच्च। "पवित्रं ते विततं ब्रह्मणस्पते", "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्" इत्यादि-ऋगादिमन्त्राणामुपबृंहणवाक्ये पवित्रशब्दस्य शिवलिङ्गपरकत्वेन व्याख्याततत्वात् सच्चिदानन्दात्मकशिवलिङ्गस्यैव यज्ञोपवीत-शब्दवाच्यत्वम्। "ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते" इति श्रुत्या पवित्रशब्दस्य चिल्लिङ्गवाचकत्वविधानात्,

सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रं विदुर्लोके ते च यज्ञोपवीतिनः ।।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ।
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम् ।।

इत्यादिना ब्रह्मोपनिषदि लिङ्गस्यैव सूत्रयज्ञोपवीतशब्दवाच्यत्वे सिद्धे तस्यैव धार्यत्वात्।

नन्वस्तु तादृशब्दप्रतिपाद्यशिवलिङ्गधारणं तन्तुमयस्यापि, "हरिकेशायोपवीतिने" इत्यादिना शिवचिह्नत्वावगमात् तद्धारणे का हानिरिति चेन्न, "क्रियाङ्गं तद्धि वै स्मृतम्" इति श्रुत्या तस्य स्थूलकर्माङ्गत्वात् तद्धारणंस्य परमप्रयोजनानुपयुक्तत्वात्, "स शिखावपनं

कृत्वा बहिःसूत्रं त्यजेद् बुधः'' इत्यादिना तस्य निषिद्धत्वात्। शिवचिह्नानामनन्तत्वात् तत्तद्धारणस्य कैरप्यशक्यत्वात्, प्रयोजनाभावे प्रेक्षावतां प्रवृत्त्यभावाच्च। एतेन नियमविधिश्च, तान्त्रिकतप्तलिङ्गशूलडमरुशङ्खचक्राङ्कननिषेधपूर्वकश्रौतभस्मरुद्राक्ष-लिङ्गधारणस्वीकारात्। ''हरिकेशायोपवीतिने, रुद्रः शिखा'' इत्यादौ भस्मरुद्राक्षादिवच्छिवस्यैव शिखासूत्रश्रवणाच्छिवलाञ्छनमिति सिद्धमिति तन्तुमयधारिभिरुक्तं निरस्तम्, ''इतो भ्रष्टस्ततो भ्रष्टः'' इति न्यायेनोभयमार्गभ्रष्टत्वात्। एषामुभयधारणवतां कथं ब्रह्मविद्याधिकारः सम्भवतीति विद्वद्भिर्निष्पक्षपातबुद्धिभिर्विचारणीयम्। ''त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणः। ब्राह्मणो वै ब्राह्मणमुपधावत्युपधावामि।'' हरदत्ताचार्येण — ''त्वं ब्राह्मणस्त्वदुपधावनमेव कार्यम्'' इत्यादिना तच्छ्रुत्यर्थस्योक्तत्वात्। किञ्चास्य —

पितामहस्तु वैश्यः स्यात् क्षत्रियः परमो हरिः ।
ब्राह्मणो भगवान् रुद्रः सर्वेषामुत्तमोत्तमः ।।
ब्राह्मणो वै सदा लोके ब्राह्मणं चोपधावति ।
महाब्राह्मणमीशानमुपधावेन्न चेतरः ।।

इत्यादिना पराशरपुराणे उपबृंहितत्वाच्च परमब्राह्मणमुखाविर्भूतगणवंशजानामस्माकं कैवल्योपनिषत्-लिङ्गोपनिषत्-स्वरूपसिद्धान्तोपनिषत्-श्वेताश्वतरोपनिषदादि-प्रसिद्धात्याश्रमादिशब्दवाच्यकेवलवीरशैवानां सर्वोत्कृष्टत्वात् तदनुष्ठीयमानधर्माणां श्रौतत्वाद् ब्रह्मविद्याङ्गत्वमिति भावः। तथा च परशिवलिङ्गस्य धार्यत्वेन ध्येयत्वेन स्मृत्यादिसिद्धत्वान्न तदितरस्योपास्यत्वम्।।६।।

''एष आत्मा अन्तर्हृदयः'' इति श्रुतौ परिच्छिन्नपुण्डरीकायतनत्वश्रवणात् कथं सर्वगतस्योपास्यत्वमित्याशङ्क्य परिहरति —

**अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।।७।।**

अर्भकम् अल्पं हृदयपुण्डरीकादिकम्, ओकः स्थानं यस्य, तस्य भावः, तस्मात् तद्व्यपदेशाच्च। ''अणीयान् व्रीहेर्वा'' इत्यत्र तस्य जीवस्यासाधारणाणीयस्त्वधर्मकथनाच्च न सर्वगतस्य परशिवस्योपास्यत्वं सम्भवतीति चेन्न, हृत्पुण्डरीकादौ निचाय्यत्वाद् व्यापकस्यापि ज्योतिर्लिङ्गादिरूपेण ध्यातुं शक्यत्वात्, अणीयस्त्वमपि व्योमवत् सम्भवति। यथा सर्वगतस्यापि व्योम्नः सूचीरन्ध्रकर्णशष्कुल्याद्यवच्छेदेन परिच्छिन्नत्वम्, स्वरूपेण च व्यापकत्वम्, तथा सर्वगतस्यापि परमेश्वरस्य शरीरत्रयावच्छेदेन लिङ्गत्रयात्मना। न च

परिच्छिन्नत्वापरिच्छिन्नत्वयोरसामानाधिकरण्यादेकस्य परिच्छिन्नत्वस्य बाधितत्वाद् उपाधेर्मिथ्यात्वमिति वाच्यम्, तद्वह्निर्न वह्निः, श्रुतिर्न गगनम् इत्यादिप्रतीत्यभावात्, गगनादाववच्छिन्नत्वानवच्छिन्नत्वयोरिव ब्रह्मण्यप्यवच्छिन्नत्वानवच्छिन्नत्वयोः पारमार्थिकत्वस्य स्वीकारात्।

ननूपाधेरपारमार्थिकत्वे तदवच्छिन्नत्वस्य कथं पारमार्थिकत्वमिति चेन्न, उपाधेरपारमार्थिकत्वे तदवच्छिन्नत्वस्य पारमार्थिकत्वं माऽस्तु, जगत्सत्यत्ववादिभिरस्माभिरस्यापि सत्यत्वस्यैव स्वीकृतत्वात्। अन्यथा परिच्छिन्नलिङ्गत्रयोपासनयाऽपरिच्छिन्नपरशिवाप्तिर्न स्यात्, "यद्यथेहोपासते" इत्यादिश्रुतेः, "यं यं भावं स्मरन् वापि" इत्यादिस्मृतेश्च। तथा च परशिवस्यैव स्वस्वातन्त्र्यशक्त्याऽनेकरूपत्वाद् भक्तानुग्रहार्थमिष्टादिलिङ्गरूपेण स्थूलादिशरीरावच्छिन्नत्वं न विरुद्ध्य इति भावः।।७।।

ननु परशिवस्य हृत्पुण्डरीकादिसम्बन्धस्वीकारे जीववत् तस्यापि सुखदुःखानुभवप्रसङ्ग इत्याशङ्क्य परिहरति —

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ।।८।।

भक्तचिन्तामणेः परशिवस्य स्वलीलाकृतदिव्यमङ्गलविग्रहस्य जीववत् सम्भोगप्राप्तिरिति चेन्न, वैशेष्यात् "अणोरणीयान् महतो महीयान्", "आत्मा गुहायां निहितोऽस्य जन्तोः" इत्यादिना अणुत्व-महत्त्व-सर्वान्तर्यामित्वादेः परमेश्वरस्यैवोपदेशात्, "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यादिना हृत्पुण्डरीकोपास्यत्वोपदेशात्। "एष अपहतपाप्मा" इत्यपहतपाप्मत्वनिर्देशाज्जीवपरमेश्वरयोर्वैशेष्यम्, विशेष एव वैशेष्यम्, भेद इत्यर्थः। चैतन्यस्वरूपेणैकत्वेऽपि विभुत्वाणुत्व-सर्वज्ञत्व-किञ्चिज्ज्ञत्वादिना तयोर्भेदोऽपि स्वाभाविक इति वक्तुं शक्यते। इदमत्र ज्ञातव्यम् — ब्रह्मधर्ममायागुणरूपया अविद्याशक्त्या सम्बद्धत्वात् सङ्कुचितस्वशक्तिरत एव ज्ञानक्रियासामरस्यात्मनः शिवस्य अंशरूपत्वाज्जीवस्येव न शिवस्य सुखदुःखादिसाक्षात्कारः सम्भवति। एतदप्यग्रे — "अंशो नानाव्यपदेशात्" इत्यादिसूत्रव्याख्यानावसरे वक्ष्यते। तथा च शिवस्य मायिकसत्त्वरजस्तमोगुणरहितत्वादकुण्ठितेच्छाद्यनेककल्याणगुणपूर्णत्वान्न जीवतौल्यम्। यद्यपि शिवातिरेकेण पदार्थान्तरं नास्तीत्यङ्गीक्रियते, तथापि जीवब्रह्मविभागवत् स्वविमर्शशक्त्यनादिपरिकल्पितमायासम्बन्धाज्जीवः, तदसम्बन्धाच्च शिवो भवति। यथा कुण्डलीभूतसर्पस्य दीर्घीभूतसर्पस्य ह्रस्वत्वदीर्घत्वादिना, प्रभाकरप्रभातन्मण्डलयोर्व्यापकत्वपरिच्छिन्नत्वादिना भेदः स्वाभाविकः। पुनः कुण्डलाकारं स्वप्रयत्नविशेषेण विहाय यथावत् सर्पो भवति, तथा जीवेशयोः किञ्चिज्ज्ञत्वसर्वज्ञत्वादिना भेदः,

शिवयोगसाधनाभ्यासप्रयत्नविशेषेण जीवत्वं विहाय शिवो भवति। अतः शिवजीवभेदाभेदयोः पारमार्थिकत्वात् संसारदशापन्नजीवभोगादेरिव न भोग इति भावः ।।८।।

शिवस्यैव सर्वसंहारकत्वमिति दर्शयितुमधिकरणान्तरमारभते —

**अत्ता चराचरग्रहणात् ।।९।।**

"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन" इत्यत्र अत्ता, संहर्ता, परमेश्वर एव, कुतः ? चराचरग्रहणात्, स्थावरजङ्गमात्मकस्य चराचरस्य जगतो ब्रह्मक्षत्रशब्दाभ्यामुपलक्षणत्वेन ग्रहणादित्यर्थः। तथा च सर्वजगत्संहर्तृत्वस्य इतरस्मिन्नसम्भवात्, "अनश्नन्नन्योऽभिचाकशीति" इत्यभोक्तृत्वप्रतिपादकश्रुतेः प्राकृतकर्मफलभोक्तृत्वनिषेधपरकत्वात्, ब्रह्मणः सर्वसंहर्तृत्वस्य सर्ववेदान्तसिद्धत्वात् तस्यैव सर्वसंहर्तृत्वमिति भावः ।।९।।

पुनर्हेत्वन्तरमाह —

**प्रकरणाच्च ।।१०।।**

"न जायते म्रियते वा विपश्चित्" इत्यादेरसाधारणानाद्यनन्तत्वादिधर्मावच्छिन्नब्रह्मप्रकरणादित्यर्थः। तथा च ब्रह्मप्रकरणपठितसर्वसंहर्तृत्वं नेतरस्योपपद्यत इति भावः ।।१०।।

अथेदानीं जीवब्रह्मणोरेकदेशवृत्तित्वाद् बिम्बप्रतिबिम्बभावो न सम्भवतीत्याह—

**गुहां प्रविष्टौ आत्मानौ हि तद्दर्शनात् ।।११।।**

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ" इत्यत्र गुहां प्रविष्टौ शिवजीवौ, न तु बुद्धिजीवौ, हि यस्मात्, आत्मानौ आत्मस्वरूपसमानस्वभावौ, तस्मादित्यर्थः। बुद्धेरात्मत्वेन साम्याभावात्। सर्वगतस्य परमात्मनः गुहाप्रवेशो नोपपद्यत इति यद्युच्येत, तदोपपत्तिमाह — तद्दर्शनादिति। "यो वेद निहितं गुहायां परमे व्योमन्", "आत्मानमन्विच्छ गुहां प्रविष्टम्" इत्यादिश्रुतिषु परमेश्वरस्यापि गुहाप्रवेशदर्शनादित्यर्थः।

ननु "ऋतं पिबन्तौ" इत्यनेन "छायातपौ" इत्यनेन च कर्मफलभोक्तृत्वच्छायातपवत् परस्परवैलक्षण्ययोरुक्तत्वात् कथं शिवजीवयोर्गुहाप्रविष्टत्वमिति चेन्न, छत्रिन्यायेनापि कर्मफलभोक्तृत्वस्यात्मनोरविरुद्धत्वात्, मलसम्बन्धतदसम्बन्धाभ्यामात्मनोः परस्परं वैलक्षण्यस्य स्वीकृतत्वात्। एवं च शिवजीवात्मनोर्गुहारूपैकदेशनिरूपितवृत्तित्वस्य

कथनान्न तयोर्बिम्बप्रतिबिम्बभावो युज्यते, बिम्बप्रतिबिम्बयोर्लोके एकत्रावस्थित्यभावस्य सर्वजनप्रसिद्धत्वात्।।११।।

पुनर्हेत्वन्तरमाह —

## विशेषणाच्च ।।१२।।

"आत्मानं रथिनं विद्धि शरीरं रथमेव च", "सोऽध्वनः पारमाप्नोति" इत्यत्र गन्तृगन्तव्यत्वेन विशेषणात्। जीवेश्वरावेव गुहाप्रविष्टौ न तु बुद्धिजीवौ, रथिरथरूपविवक्षया शिवजीवयोर्विशेषणोपदेशाच्च।।१२।।

सर्वव्यापकस्य परमेश्वरस्य गुहावर्तित्वमुपदिश्य तस्यैव प्रदेशान्तरं दर्शयति —

## अन्तर उपपत्तेः ।।१३।।

"य एष अक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच। एतदमृतमभयमेतद्ब्रह्म" इत्यादिश्रुतौ परमेश्वर एवान्तरोऽक्षिमध्यवर्ती उपदिष्टः, न तु जीवश्छायात्मा वा। कुतः? उपपत्तेः। आत्मत्व-अमृतत्व-अभयत्व-ब्रह्मत्वादीनां धर्माणां परमेश्वर एव उपपत्तेर्युक्तत्वादित्यर्थः।।१३।।

सर्वव्यापकस्य परशिवस्य कथमक्षिस्थानकत्वमित्याशङ्कायामाह —

## स्थानादिव्यपदेशाच्च ।।१४।।

"यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरोऽयं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष आत्मा अन्तर्याम्यमृतः" इत्यत्र चक्षुःस्थानत्वस्यापि परशिवस्य निर्दिष्टत्वाद् हृदयाद्युपास्यत्ववद् अक्ष्युपास्यत्वमपि तस्यैवोपपद्यते, उपासनायाः किञ्चिद्गुणविषयकत्वनियमात्। तदप्यादिशब्देनोच्यते, "तस्योदिति नाम हिरण्यश्मश्रुः" इत्यादिश्रुतौ प्राकृतगुणातीतस्य परशिवस्य नामरूपव्यपदेशात्। "तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।।", "द्वावेतौ ब्रह्मणो रूपम्" इत्यादिना परस्यैव निराकारत्वसाकारत्वावगमान्न तयोस्तत्र विरुद्धत्वं शङ्कनीयम्।।१४।।

इतश्च अक्ष्यन्तःपुरुषः साक्षाच्छिव एवेति निर्दिशति —

## सुखविशिष्टाभिधानादेव च ।।१५।।

सुखविशिष्टस्य परब्रह्मणः "प्राणो ब्रह्म" इत्याद्युपक्रमवाक्ये श्रूयमाणत्वादिहापि तस्यैवाभिधानात्। "आचार्यस्तु ते गतिं वक्ता" इति श्रुत्या गतिमात्रस्यैव प्रतिज्ञानान्नान्यस्योपास्यत्वम्। "एतं हि सर्वाणि वामान्यभिसंयन्ति" इत्यत्रापि सुखविशिष्टाभिधानाद् ब्रह्मैवोपास्यम्। "प्राणं च हास्मै तदाकाशं चोचुः" इति श्रुत्या कंशब्दस्य खंशब्दस्य च ब्रह्मप्रतीकभूताकाशार्थस्य प्रतिपादनान्नार्थान्तर-मुपास्यत्वेनोपदिष्टम्।।१५।।

पुनर्हेत्वन्तरमाह —

## श्रुतोपनिषत्कगत्यभिधानाच्च ।।१६।।

श्रुतौ अभ्यस्ता उपनिषद् आत्मविद्या येन तस्य या ब्रह्मविदो गतिर्देवयानाख्या, तस्या अभिधानात्, "ते अर्चिषमभिसम्भवन्ति" इत्युत्तरवाक्ये कथनादित्यर्थः। तथा च सैव गतिरिहोपकोसलस्याक्षिपुरुषविद उपदिश्यमाना दृश्यते। तस्माद् अक्षिपुरुषस्य ब्रह्मत्वं सिद्धम्।।१६।।

अस्मिन्नर्थे हेत्वन्तरमाह —

## अनवस्थितेरसम्भवाच्च नेतरः ।।१७।।

इतरश्छायापुरुषादिर्न अक्ष्यन्तःपुरुषो भवति। कुतः? अनवस्थितेः, उपासकस्य सर्वत्र छायासम्पादकपुरुषान्तरस्यासान्निध्यात्, असम्भवाच्च = अमृतत्वादि-गुणानामसम्भवाच्चेत्यर्थः, अक्ष्यन्तःपुरुषः शिव एवेत्यर्थः।।१७।।

सर्वगतस्य शिवस्य चक्षुरन्तरोपास्यत्वमुपदिश्य सर्वान्तरोपास्यत्वमप्याह —

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ।।१८।।

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः", "य इमं च लोकम्" इत्याद्युपक्रम्यान्तर्यामिब्राह्मणवाक्यं श्रूयते। तत्र अधिदैवादिषु पृथिव्यादिषु योऽन्तर्यामी उक्तः, स परशिव एव। कुतः? तद्धर्मव्यपदेशात्। तस्य परशिवलिङ्गस्य धर्माणां पृथिव्याद्यधिदेवतानियन्तृत्वामृतत्वात्मत्वादीनां व्यपदेशात् कथनादित्यर्थः।

ननु परमशिवस्य ब्रह्मणो निर्धर्मकस्य यमयितृत्वासम्भवात् शुद्धसत्त्वप्रधान-मायाप्रतिबिम्बरूपेश्वरस्यैव सर्वनियन्तृत्वादिकमिति चेन्न, तादृशप्रतिबिम्बेऽन्तर्याम्यमृत इत्युक्तामृतत्वासम्भवात्, तस्मादनन्तस्य शिवस्यैव सर्वनियन्तृत्वसम्भवात्। न च

सर्वनियन्तृत्वसर्वकर्तृत्वादिधर्मानवच्छिन्नस्य शिवान्यस्यैव परब्रह्मत्वमिति वाच्यम्, तादृशनिर्धर्मकस्य स्वस्वरूपज्ञानरहितस्य स्फटिकशिलादिवज्जडत्वापत्तेः, तत्सत्त्वे प्रमाणाभावाच्च, अण्डरसन्यायेन स्वविमर्शशक्त्यविभागपरामर्शदशायां तस्यैव निर्गुणत्वं विभागपरामर्शदशायां च सगुणत्वमिति वक्तुं शक्यत्वात्।

ननु "विश्वाधिको रुद्रः" इत्यादौ विश्वाधिकत्वनिर्देशाद् विश्वान्तर्यामित्वं कथमुपपद्यत इति चेन्न, व्योमवत् परिपूर्णस्य महेश्वरस्य विश्वाधिकत्वविश्वान्तर्यामित्वयोरविरोधात्।

ननु नियन्तृत्वमित्यत्र नियमनं चेतनसान्निध्याज्जडस्य व्यापारः, तच्छक्तिमत्त्वं नियन्तृत्वम्, तच्च अचिन्त्यमायाशक्तेश्चिदात्मनः शरीरं विनैवोपपन्नं निर्गुणपरब्रह्मणः? इति चेन्न, भवन्मते ब्रह्मातिरिक्तस्य वस्तुनोऽभावात्, तत्सान्निध्यस्यासम्भवात्।

किञ्च, नियामकस्यापि नियामकान्तराङ्गीकारेऽनवस्थाप्रसङ्गः। न च तयोर्भेदाभावान्नानवस्थेति वाच्यम्, मिथ्याभूतसत्ययोरत्यन्तभिन्नत्वात्, उपाध्यवच्छिन्नानवच्छिन्नयोर्भेदस्य मिथ्यामायावादिस्वीकृतत्वात्, अन्यथा तत्त्वमस्यादि-वाक्ये लक्षणानुपपत्तेः। तस्मात् सर्वनियन्तृत्वकर्तृत्वसर्वज्ञत्वादिधर्मविशिष्टस्यैव परब्रह्मणः शिवस्य सर्वान्तर्यामित्वं सिद्धम्।।१८।।

ननु महदहङ्कारादिरूपेण परिणामित्वात् सांख्योक्तप्रधानस्यैवान्तर्यामित्वमस्तु? इत्यत्राह —

## न च स्मार्तम् अतद्धर्माभिलापात् ।।१९।।

स्मार्तम् =सांख्यस्मृतिनिर्दिष्टम्, प्रधानमित्यर्थः। चकारात् तत्सत्त्वगुणप्रतिफलितं चैतन्यमपि ग्राह्यम्, न अन्तर्यामि भवति। कुतः? अतद्धर्माभिलापात्, प्रधानादिभिन्न-परशिवधर्माणामभिलापादित्यर्थः। "अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता" इत्यत्रोक्तादृष्टत्वादीनां प्रधाने सत्त्वेऽपि द्रष्टृत्वादीनां तत्रासत्त्वान्न प्रधान-स्यान्तर्यामित्वम्।

ननु "अजामेकाम्" इत्यादिश्रुतौ प्रपञ्चकारणत्वस्य निर्देशाद् ब्रह्मसम्बन्धमात्रेण सूर्यकान्तादाविव तत्र प्रवृत्तिसम्भवात् तस्यैवान्तर्यामित्वं वक्तुं शक्यते? इति चेन्न, "सोऽकामयत बहु स्यां प्रजायेय", "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादिना परशिवस्यैव ब्रह्मणोऽन्यनिरपेक्षतया जगज्जन्मादिहेतुत्वावगमात्। किञ्च, तत्प्रतिबिम्बितेश्वरस्यापि

नान्तर्यामित्वम्, तस्य मिथ्यात्वात्, ब्रह्मप्रधानयोर्नीरूपत्वाद् बिम्बप्रतिबिम्बभावकल्पनाया असम्भवात्।

"अखण्डाद्वैतभाने तु सर्वं शिवमयं जगत्", "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्येन निर्दिष्टं जगतः परब्रह्मशिवस्वरूपत्वं मिथ्याभूतमायातत्प्रतिफलितेश्वरोपादानकत्वे नैव सम्भवति, तस्माद्विश्वात्मकपरशिवस्यैव सर्वविश्वान्तर्यामित्वं सिद्धम्।।१९।।

ननु जीवस्य चेतनत्वाद् द्रष्टृत्वादिधर्माणां तत्र सम्भवात्तस्यैवान्तर्यामित्वं कुतो न भवतीत्याशङ्कायामाह —

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ।।२०।।

शारीरश्च जीवोऽपि नेत्यनुवर्तनम्, अन्तर्यामि न भवति। कुतः? एनं जीवमुभयेऽपि काण्वा माध्यन्दिनाश्च भेदेनान्तर्यामिभिन्नतया, यथा — "यो विज्ञाने तिष्ठन्" इति काण्वाः, "य आत्मनि तिष्ठन्" इति माध्यन्दिनाः, अधीयते पठन्ति। अत्र विज्ञानात्मशब्दयोर्जीवपरत्वाद् जीवस्य प्रतिबिम्बरूपत्वे आत्मशब्दवाच्यत्वं न स्यात्, तस्य मिथ्यात्वात्। तत्त्वज्ञानेनोपाधिनाशे मोक्ष इत्यङ्गीकारे जीवेश्वरयोर्नाश एव मोक्ष इति सम्पद्यते, अतो बौद्धादिमतप्रवेशापत्तिः। आत्महननमपुरुषार्थ इत्यपुरुषार्थत्वापत्तिश्च।

ननु घटाकाशोपाधिभूतघटस्य नाशे तस्याकाशमात्रवद् अन्तःकरणावच्छिन्न-चैतन्यस्योपाधिभूतान्तःकरणनाशे तदवच्छिन्नचैतन्यं चैतन्यमात्रं भवति। कुतो दोषप्रसक्तिरिति चेत्, तस्य जीवत्वाङ्गीकारे घटाद्यवच्छिन्नचैतन्यस्यापि जीवत्वापत्ते-रुपाध्योर्जडत्वाविशेषात्। तस्मादजडान्तःकरणविशिष्टस्य जीवत्वं वाच्यम्। अत एव "चित्तमात्मा" इति शिवेन सूत्रितम्। अन्यथा य आत्मनि तिष्ठन्नित्यन्तर्यामिब्राह्मण-वाक्यविरोधः स्यात्।

ननु "नान्यदतोऽस्ति द्रष्टा" इत्यादिना परमेश्वराद् अन्यद्रष्ट्रादेरभावस्य ज्ञायमानत्वाद् द्रष्टृद्वयमेकस्मिन् शरीरे नोपपद्यत इति चेन्न, "द्वा सुपर्णा" इति मन्त्रेण जीवब्रह्मणोः सामानाधिकरण्यस्य निर्दिष्टत्वान्नान्यदतोऽस्ति द्रष्टेति श्रुत्याऽधिष्ठात्रन्तरं निषिद्धम्, न तु किञ्चिज्ज्ञजीवोऽपि। "यत्र हि द्वैतमिव भवति" इत्यनेन जीवब्रह्मणोः सङ्कुचितस्वशक्त्यवस्थायां स्वाभाविकभेदो निर्दिष्टः, "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यादिना विकसितस्वशक्तिदशायां तयोः स्वाभाविकोऽभेदः।

नन्वेतादृशमोक्षदशायामभेदस्यैव स्वीकारे भेदस्य स्वाभाविकत्वं न सिद्ध्यतीति चेन्न, तत्रापि "सदा पश्यन्ति", "मम साधर्म्यमागताः", "मुक्तानां परमा गतिः",

"सायुज्यं प्रतिपन्नाय", "यस्मिन् पदे विराजन्ते मुक्ताः संसारबन्धनैः" इत्यादिना भेदस्य ज्ञायमानत्वात्। एवं च समस्तवेदान्तानां भेदाभेदप्रतिपादकत्वाद् जीवब्रह्मणोर्भेदाभेदावपारमार्थिकाविति न वाच्यम्। तस्मात् सर्वान्तर्यामित्वं शिवस्यैव सिद्ध्यति, तस्यैव सर्वनियामकत्वात्।।२०।।

परशिवस्य सर्वश्रेष्ठत्वं दर्शयितुमधिकरणान्तरमारभते —

**अदृश्यत्वादिगुणको धर्मोक्तेः ।।२१।।**

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादिश्रुतावदृश्यत्वादिगुणकः परमेश्वर एव। कुतः ? धर्मोक्तेः। "यः सर्वज्ञः सर्ववित्" इत्यादिना परशिवासाधारणसर्वसाक्षित्वादिधर्माणामुक्तेः, वचनादित्यर्थः।।२१।।

अस्मिन्नर्थे हेत्वन्तरमाह —

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ।।२२।।**

इतरौ प्रकृतिजीवौ न भूतयोनिशब्दवाच्यौ। कुतः ? विशेषणभेदव्यपदेशाभ्याम्। विशेषणं च भेदव्यपदेशश्च ताभ्याम्, "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः शिवः।।" इत्यत्र दिव्यत्वाप्राणत्वादिविशेषणात्, "अक्षरात्परतः परः" इत्यनेन च भेदव्यपदेशाच्च, "क्षरं प्रधानं अमृताक्षरं हरः। क्षरात्मना वीक्षते देव एकः" इति श्रुत्या जीवस्याक्षरशब्दवाच्यत्वात्, "कूटस्थोऽक्षर उच्यते" इति स्मृतेश्च।।२२।।

पुनरपि हेत्वन्तरमाह —

**रूपोपन्यासाच्च ।।२३।।**

भूतयोनिः परशिव एव। कुतः ? रूपोपन्यासाच्च "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृत्ताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वान्तरात्मा।।" इत्यादिश्रुतौ परमेश्वरस्य सर्वभूतान्तरत्वस्य सर्वात्मकत्वस्य च रूपस्य उपन्यासात्, प्रधानजीवयोः सर्वभूतान्तरत्वसर्वात्मकत्वयोरयोगाद् अदृश्यत्वादिगुणकः परमेश्वर एवेति सिद्धम्।।२३।।

परशिवस्य विश्वकारणत्वादिधर्माननुदिश्य वैश्वानरः परमेश्वर इत्याह —

**वैश्वानरः साधारणशब्दविशेषात् ।।२४।।**

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इत्यादिश्रुतौ वैश्वानरः परमेश्वर एवोपास्यत्वेन निर्दिष्टः।

ननु "अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते, तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति" इति बृहदारण्यकश्रुत्या वैश्वानरशब्दस्य जाठराग्नौ प्रयोग-दर्शनात्, "एष वाग्निर्वैश्वानरः" इत्यादिना प्रसिद्धभूताग्न्यादौ वैश्वानरशब्दस्य वर्तमानत्वात्, किञ्च, "प्रादेशमात्रम्" इत्यनेन वैश्वानरशब्दवाच्यस्य परिच्छिन्नत्वावगमात् परमेश्वरस्य तदसम्भवान्न वैश्वानरः? इति चेन्न, साधारणशब्दविशेषात्, साधारणशब्दयोर्वैश्वा-नरात्मशब्दयोर्विशेषात्। वैश्वानरशब्दस्य जाठरभूताग्न्यादिसाधारण्येऽप्यात्मशब्दस्य जीवपरसाधारण्येऽपि च— "कोऽयमात्मा किं ब्रह्म" इति, "आत्मानमेवैनं वैश्वानरं संप्रत्यध्येषि, तमेव नो ब्रूहि" इत्यादिषु च परमेश्वरमात्रवृत्तिब्रह्मादिशब्द-प्रयोगादित्यर्थः।।२४।।

अत्रैव हेत्वन्तरमाह —

**स्मर्यमाणमनुमानं स्यादिति ।।२५।।**

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इति, "अग्निरास्यं द्यौर्मूर्धा"। इत्यादिषु यद्विश्वरूपत्वं स्मर्यमाणं प्रतिपाद्यमानं तद् अनुमानं स्यात्, परमेश्वर एव वैश्वानर इत्यत्रानुमानिकं स्यादित्यर्थः। तथा च विश्वरूपत्वादिधर्मस्य परमेश्वरादन्यत्र जठरादावनुपपद्यमानत्वाद् वैश्वानरः परमेश्वर एवेति सिद्धम् ।।२५।।

पुनर्हेत्वन्तरमाह —

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्यु-पदेशादसंभवात् पुरुषमपि चैनमधीयते ।।२६।।**

ननु वैश्वानरशब्दादिभ्योऽन्तःप्रतिष्ठानात् "स यो हैनमग्निं वैश्वानरं पुरुषोऽन्तः-प्रतिष्ठितं वेद" इत्यत्र पुरुषान्तःप्रतिष्ठितत्वस्येश्वरेऽसम्भवादीश्वरादन्य एव वैश्वानर इति चेन्न, तथा दृष्ट्युपदेशात्। तथा जाठराग्न्यवच्छिन्नस्य शिवस्य दृष्टेरुपासनाया उपदेशात् कथनात्, असम्भवात् परमेश्वरादन्यस्मिन् द्युमूर्धत्वादीनां धर्माणामसम्भवात्। पुरुषमपि चैनम्, एनं वैश्वानरं पुरुषमधीयते वाजसनेयिनः — "स यो हैनमेवाग्निम्" इत्यादिना।।२६।।

अन्यत्रानुपपत्तिमाह —

## अत एव न देवता भूतं च ।।२७।।

अत एव प्रागुक्तद्युमूर्धत्वादिधर्माणामसम्भवादेव भूतं प्रसिद्धभूताग्निः, देवता तदभिमानिदेवता च, एतद् द्वयमपि न वैश्वानरशब्दवाच्यमित्यर्थः। तथा च सर्वान्तर्यामित्वसर्वात्मकत्वद्युमूर्धत्वादिधर्माणां शिवादन्यत्रानुपपन्नत्वात् स एव वैश्वानर इति भावः।।२७।।

जाठराग्न्यवच्छिन्नस्य शिवस्योपास्यत्वमुक्त्वा केवलशिवस्योपास्यत्वमित्यस्मिन्नर्थे आचार्यमतं दर्शयति —

## साक्षादप्यविरोधं जैमिनिः ।।२८।।

साक्षाद् जाठराग्न्यविशिष्टे केवलब्रह्मण्यपि, अविरोधं वैश्वानरशब्दस्य विरोध-राहित्यम्, जैमिनिः, मन्यते इत्यर्थः। विश्वश्चासौ नरश्च विश्वनरो विश्वरूपः परशिवः, विश्वनर एव वैश्वानरः। तथा च विश्वरूपपरशिवे वैश्वानरशब्दस्य योगव्युत्पत्त्या वृत्तिसम्भवाद् वैश्वानरशब्दवाच्यः सर्वव्यापकः परशिव एव, "रुद्रो वा एष यदग्निः। तस्यैते तनुवौ घोरान्या शिवान्या" इति श्रुतावग्नेः साक्षात्परशिवात्मकत्वोपदेशात्। अग्रं नयतीति व्युत्पत्त्या चाग्निशब्दवाच्योऽपि सर्वश्रेष्ठः परशिव एव।।२८।।

ननु व्यापकस्य प्रादेशिकत्वं कथमुपपन्नं स्यादित्याशङ्कायामाश्मरथ्यमुनिमतं दर्शयति—

## अभिव्यक्तेराश्मरथ्यः ।।२९।।

अपरिमितस्यापि परब्रह्मणः शिवस्य प्रादेशमात्रपरिणामवत्त्वप्रतिपादकश्रुतिरुपपद्यते। कस्मात्? अभिव्यक्तेः, परशिव एव भक्तानुग्रहार्थं हृदयादिप्रदेशविशेषेष्वभिव्यज्यते। "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी च भगवान् तस्मात् सर्वगतः शिवः।।" इति श्वेताश्वतरश्रुतावपि सर्वगतस्यापि भक्तोपासनार्थं परिच्छिन्नत्वं व्यपदिश्यते। तस्मादत्रापि प्रादेशिकत्वं न विरुद्ध्यत इति भावः।।२९।।

अस्मिन्नर्थे आचार्यान्तरमतं दर्शयति —

## अनुस्मृतेर्बादरिः ।।३०।।

अनुस्मृतेः= हृदयादिप्रदेशविशेषेषु परशिवस्यावगमात्, स परमेश्वरः प्रादेशमात्र इत्युच्यते। यथा आढकादिपरिमितं तण्डुलादिकमाढकादिकमित्युच्यते, तथा प्रदेशावगतः परमेश्वरः प्रादेश इति बादरिराचार्यो मन्यते।।३०।।

इतश्च सर्वगतस्य शिवस्य परिच्छिन्नत्वं न विरुद्ध्यत इत्यत्र जैमिनिमतमाह —

**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ।।३१।।**

प्रादेशमात्रश्रुतिः प्रादेशमात्रसम्पत्तेरुपपद्यत इति जैमिनिराह। तथाहि वैश्वानरस्य प्रादेशमात्रत्वे श्रुत्यन्तरं दर्शयति वाजसनेयब्राह्मणे इत्यर्थः। "प्रादेशमात्रमिह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु वा एनान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पात-यिष्यामि" इति, "स होवाच मूर्धानमुपदिशन्नुवाच एष एवावतिष्ठन् वैश्वानर इति। चक्षुष्युपदिशन्नुवाच एष वै सुतेजा वैश्वानर इति। नासिके उपदिशन्नुवाच एष वै पृथग् वर्त्मात्मा वैश्वानर इति। मुख्यमाकाशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति। अप उपदिशन्नुवाच एष वै वैश्वानर इति। चुबुकमुद्दिशन्नुवाच एष वै प्रतिष्ठा रयिर्वैश्वानरः" इत्यादिना द्युलोकप्रभृतिषु वैश्वानरावयवमूर्धादिसम्पत्तेर्दर्शनाद् जैमिनिः परशिवब्रह्मणः प्रादेशमात्रत्वमविरुद्धमिति मन्यते।।३१।।

पुनर्हेत्वन्तरमाह —

**आमनन्ति चैनमस्मिन् ।।३२।।**

एनं सर्वव्यापकपरशिवम्, अस्मिन् भ्रूमध्यादौ, आमनन्ति। जाबालादय इति शेषः। कस्मिन् प्रतिष्ठितमिति प्रश्ने वरणायां नास्यां च प्रतिष्ठितमिति। का वै वरणा का च नासीति? सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणा भवतीति, सर्वानीन्द्रियकृतान् दोषान् नाशयति तेन नाशी भवतीति निरुच्य, कतमच्चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च यः सन्धिः, स एव द्युलोकस्य च परस्य च सन्धिर्भवतीति जाबालश्रुतौ परशिवस्य प्रादेशमात्रत्वव्यपदेशात् परशिवस्य जाठराग्न्यवच्छिन्नतयोपास्यत्वेन वैश्वानरः शिव एव। सर्ववेदान्तेषु प्रायेण परोपासनस्यैव निर्दिष्टत्वात् शिवलिङ्गव्यतिरिक्ते परब्रह्मशब्दवाच्यत्वस्य गगनकुसुमायमानत्वाद् वैश्वानरशब्दवाच्यं शिवलिङ्गमेवेति सिद्धम्।।३२।।

**।। इति श्रीमच्छिवाद्वैतप्रतिपादिकायां शाङ्करीवृत्तौ समन्वयाध्यायस्य द्वितीयः पादः समाप्तः ।।**



## प्रथमाध्याये तृतीयः पादः

केषाञ्चित् श्रुतिवाक्यानां षड्विधलिङ्गतात्पर्येण सर्वजगन्मयसर्वज्ञपरशिवब्रह्मणि समन्वयप्रकारं निरूप्य पुनः केषाञ्चिद्वाक्यानां संशयनिरसनाय सर्वज्ञसार्वभौमेन व्यासेन तृतीयः पादः प्रारभ्यते —

### द्युभ्वाद्यायतनं स्वशब्दात् ।।१।।

द्यौश्च भूश्च द्युभुवौ, द्युभुवौ आदी यस्य यद् द्युभ्वादि, तस्य "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः" इत्यत्र सूत्रे मणिगणा इव पृथिव्यन्तरिक्षमनःप्राणादिजगतः ओतत्वविशिष्टस्य आयतनं स्थानं ब्रह्म भवति, न तु प्रधानक्षेत्रज्ञभूतवायूनामायतनत्वं सम्भवति, स्वशब्दात् "तमेवैकं जानथ आत्मानम्" इत्यात्मशब्दश्रवणादित्यर्थः। किञ्च, "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः" इति माण्डूक्यश्रुतावप्यात्मशब्दस्य परशिवपरत्वान्नेतरो द्युभ्वाद्यायतनं भवितुमर्हति।।१।।

ननु "सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" इत्यत्र सेतुशब्दनिर्देशात्, सेतोश्च पारवत्त्वोपपत्तेः, ब्रह्मणस्तदनुपपत्तेः, अनन्तमपारमिति श्रवणात् शिवादन्यस्य द्युभ्वाद्यायतनत्वं स्यादित्याशङ्कायां हेत्वन्तरमाह —

### मुक्तोपसृप्यव्यपदेशात् ।।२।।

मुक्तैरुपसृप्यं मुक्तोपसृप्यम्, आणवमायीयकार्मिकमलत्रयदोषादिमुक्तैः। मलत्रयं चोक्तमध्यात्मनये —

गोपितस्वमहिम्नोऽस्य सम्मोहाद्विस्मृतात्मनः ।
यः सङ्कोचः स एवास्य आणवो मल उच्यते ।।
ततः षट्कञ्चुकव्याप्तिविलोकितनिजस्थितेः ।
भूतदेहे स्थितिर्यासौ मायीयो मल उच्यते ।।
यदन्तःकरणाधीनारब्धकर्मेन्द्रियादिभिः ।
बहिर्व्याप्रियते कार्मं मलमेतस्य तन्मतम् ।। इति।

उपसृप्यं प्राप्यं ब्रह्म द्युभ्वाद्यायतनम्, तस्य प्राप्यत्वस्य व्यपदेशात्।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।।

इत्युक्त्वा — "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।।", "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यादौ, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते।।" इत्यादौ च ब्रह्मणो मुक्तोपसृप्यत्वस्य प्रसिद्धत्वात्, प्रधानादेर्मुक्तोपसृप्यत्वस्य क्वचिदप्यदर्शनाद् द्युभ्वाद्यायतनं ब्रह्मैव।।२।।

पुनर्हेत्वन्तरमाह —

## नानुमानमतच्छब्दात् ।।३।।

अनुमानं प्रधानं न द्युभ्वाद्यायतनं भवति, कुतः? अतच्छब्दात् प्रधानप्रतिपादकशब्दाभावात्। "यः सर्वज्ञः स सर्ववित्" इति श्रुत्युक्तसर्वज्ञत्वादिधर्माणामचेतनप्रधानवाय्वादावसत्त्वात् सर्वकारणसर्वाधिष्ठानपरशिवस्यैव द्युभ्वाद्यायतनत्वम्।।३।।

नन्वचेतनत्वात् प्रधानस्य तदायतनत्वाभावेऽपि जीवस्य किं न स्यादित्याशङ्क्याह —

## प्राणभृच्च ।।४।।

प्राणभृज्जीवोऽपि द्युभ्वाद्यायतनं न भवति, अतच्छब्दादिति पूर्वोक्तहेतुरेवानुकृष्यते। यद्यपि जीवस्य चैतन्यमात्मशब्दवाच्यत्वं च दृश्यते; तथापि "एषोऽणुरात्मा चेतसा वेदितव्यः", "वालाग्रशतभागस्य शतधा कल्पितस्य च। जीवो भागः स विज्ञेयः" इत्यादिश्रुतिषु जीवस्य परिच्छिन्नत्वादिव्यपदेशादेवातच्छब्दत्वम्। सर्वव्यापकस्वस्वातन्त्र्यशक्तिविशिष्टस्यैव द्युभ्वाद्यायतनत्वम्।।४।।

हेत्वन्तरमाह —

## भेदव्यपदेशाच्च ।।५।।

इतश्च जीवो द्युभ्वाद्यायतनं न भवति, कुतः? भेदव्यपदेशात्; भेदव्यपदेशः, तस्मादित्यर्थः "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ" इत्यादौ जीवब्रह्मणोर्ज्ञातृज्ञेयत्वादिभिः स्वाभाविकभेदस्य व्यपदेशात्। किञ्चिज्ज्ञस्य जीवस्य प्राणभृतो मुमुक्षुत्वाद् ज्ञातृत्वम्, ब्रह्मणो ज्ञेयत्वम्, तस्यैव द्युभ्वाद्यायतनत्वम्, न जीवस्येत्यर्थः।।५।।

पुनः शिवस्यैव द्युभ्वाद्यायतनत्वमित्याह —

## प्रकरणात् ।।६।।

प्रकरणं तावत् परशिवब्रह्मण एवेदम्, ''तस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'' इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुतेर्जीवप्रधानादीनां ज्ञानेन सर्वज्ञानासम्भवात्, तेषां सर्वोपादानत्वाभावात् ; परमशिवज्ञानेन सर्वविज्ञानसम्भवात्, तस्य सर्वजगदुपादानत्वात्। दर्शपूर्णमासादिप्रकरणपठितानाम् — ''समिधो यजति'' इत्यादिवाक्यानामिव परशिवब्रह्मप्रकरणपठितभेदाभेदप्रतिपादकसमस्तवेदान्तवाक्यानां परशिवपरकत्वात् शिवप्रकरणमेवेदम्।

ननु ''नेह नानास्ति किञ्चन'' इत्यादिश्रुत्या सर्वप्रपञ्चनिषेधस्यावगम्यमानत्वात् सर्ववेदान्तानामुपक्रमोपसंहारादिषड्विधलिङ्गतात्पर्येण निर्विशेषब्रह्मपरत्वमेवेति चेन्न, ''नेह नानास्ति किञ्चन'' इति श्रुत्या सर्वस्य शिवात्मकत्वबोधनान्न प्रपञ्चनिषेधोऽभ्युपगम्यते। अन्यथा ''आत्मैवेदं जगत्सर्वम्'', ''सदेव सौम्येदमग्र आसीत्'', ''ज्ञाऽज्ञौ द्वावजावीशानीशौ'', ''सर्वं खल्विदं ब्रह्म'' इत्यादिश्रुतीनामप्रामाण्यं स्यात्। तस्मान्निर्विशेषब्रह्माद्वैतवादोऽवैदिकः।

ननु — ''एकमेवाद्वितीयं ब्रह्म'' इत्यादिना ब्रह्मणः स्वगतसजातीयविजातीय-भेदत्रयरहितत्वस्य सिद्धत्वात् कथमवैदिक इति चेन्न, तस्याः ''सर्वं शिवमयं जगत्'', ''सर्वं खल्विदं ब्रह्म'', ''लिङ्गमध्ये जगत्सर्वं त्रैलोक्यं सचराचरम्'' इत्यादिवाक्यानामिव शिवस्य सर्वजगदात्मकत्वे तात्पर्यात्, अन्यथा भवदभिमतार्थस्य एकेनैव पदेन निर्वाहे पदद्वयस्यानर्थक्यं स्यात्। न च तवाऽप्येतत्समानमिति वाच्यम्, पदद्वयस्य ''सर्वं शिवमयं जगत्'' इत्यस्मिन्नर्थे आदरातिशयार्थत्वात्।

किञ्च, ''शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य'', ''ज्ञात्वा शिवं शान्तिमत्यन्तमेति'' इत्याभ्यां श्रुतिभ्यां शिवशब्दवाच्यस्वप्रकाशितशक्तिविशिष्टस्यैव ब्रह्मणो ध्येयत्वज्ञेयत्वदर्शनात्, तज्ज्ञानस्यैवात्यन्तशान्तिहेतुत्वव्यपदेशात्, ''ईशं ज्ञात्वा अमृता भवन्ति'' इति श्रुत्येशितृत्वशक्तिविशिष्टस्य ज्ञानादमृतत्वश्रवणात्, ''ज्ञाननिर्मथनाभ्यासात् पाशं दहति पण्डितः'' इत्यादिना शिवज्ञानस्यैव मुक्तिहेतुत्वात्, निर्विशेषनिः-शक्तिकब्रह्मज्ञानस्याप्रयोजकत्वाद् द्युभ्वाद्यायतनं परमशिव एवेति सिद्धम्।।६।।

अपि च, परशिवपरत्वे हेतुमाह —

## स्थित्यदनाभ्यां च ।।७।।

द्युभ्वाद्यायतनं परशिव एव, कुतः? स्थित्यदनाभ्यां च। स्थितिश्च अदनं च स्थित्यदने, ताभ्यामिति स्थित्यदनयोः पञ्चम्यन्तपदोपस्थाप्यत्वम्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।" अस्मिन्मन्त्रे कर्मफलभोक्तृत्वं जीवस्य, तत्साक्षित्वेन स्थितिमत्त्वं च परमेश्वरस्य निर्दिश्यते। तस्माद्द्युभ्वाद्यायतनं परमेश्वर एव भवति। अन्यथा शिवजीवयोर्भेदप्रतिपादकश्रुतेरसङ्गतत्वं स्यादित्यर्थः।

ननु — "एक एव रुद्रो न द्वितीयाय तस्थे" इत्याद्यनेकश्रुतिभिः सर्वप्रपञ्च-निषेधपूर्वब्रह्माद्वैतस्य व्यवस्थापितत्वात् "द्वा सुपर्णा सयुजा" इति श्रुतिसिद्धशिव-जीवयोर्भेदस्य न पारमार्थिकत्वमिति चेन्न, सृष्टेः पूर्वमण्डरसन्यायेन सर्वप्रपञ्चस्या-विभागपरामर्शदशायां व्यक्तमूर्तामूर्तोभयप्रपञ्चाभावाद् अद्वितीयत्वनिर्गुणत्वप्रतिपादक-श्रुतीनां तद्दशापरत्वं वक्तव्यम्। भेदप्रतिपादकश्रुतीनां विभागदशापरत्वमित्यस्मिन्नाशये — "नान्यः कश्चिन्मर्त्यो व्यतिरिक्तः", "आत्मा वा इदमग्र एवासीद् नान्यत् किञ्चनामिषत्", "सदेव सौम्येदमग्र आसीत्", "यदा तमस्तत्र दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः", "अहमेकः प्रथममासं वर्तामि च भविष्यामि च" इत्यथर्वशिरस्तैत्तिरीयच्छान्दोग्यश्वेताश्वतरादिश्रुतयः सन्ति।

ननु सृष्टेः प्राग् जगत्कारणप्रकृतेः परशिवसद्भावात् कथं तदाद्वैतमिति चेन्न, "देवात्मशक्तिं स्वगुणैर्निगूढाम्", "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिषु शक्तिशक्तिमतोरभेददर्शनात्। उक्तं च वायुसंहितायाम् — "शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा।। परास्य विविधा शक्तिः प्रबोधानन्दरूपिणी। एकानेकस्वरूपेण भाति भानोरिव प्रभा।।" इति। वदन्ति चाभियुक्ता अपि — "शक्तयश्च जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः", "शक्तिस्तु शक्तिमद्रूपाद् व्यतिरेकं न गच्छति। तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव।। शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः। अतस्तद्धर्मधर्मित्वात् परा शक्तिः परात्मनः।। न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते।।" इति।

तथा च जगदाकारस्वविमर्शशक्तेः शिवाभिन्नत्वात् तादृशशक्तिपरिकल्पित-स्वसङ्कोचापरपर्यायाख्यात्यात्मकाविद्याशक्तिविशिष्टस्य सच्चिदानन्दात्मनो जीवत्व-किञ्चिज्ज्ञत्वाणुत्वादयः स्वाभाविकधर्माः सृष्ट्युत्तरकालावच्छेदेनेति ज्ञायन्ते। तथा च भेदप्रतिपादकश्रुतीनामेतत्कालपरत्वं वक्तव्यम्। एवं च द्युभ्वाद्यायतनत्वस्य जीवस्य वक्तव्यत्वे भेदश्रुतेरसङ्गतिः स्यादित्यतो महेश्वर एव द्युभ्वाद्यायतनम्।।७।।

मुक्तोपसृप्यत्वेन निर्दिष्टस्य द्युभ्वाद्यायतनस्य परशिवस्य साक्षात्कारवतो निरतिशयसुखं दर्शयितुमाह —

## भूमा सम्प्रसादादध्युपदेशात् ।।८।।

"यो वै भूमा तत्सुखम्" इति भूम्नः सुखस्वरूपत्वं श्रूयते। तल्लक्षणं तु — "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यनेन निर्दिश्यते। अत्र भूमा प्राण एव भवितुमर्हति, तत्रापि सुखस्वरूपस्य सत्त्वात्, "प्राणो वा अमृतम्" इति श्रवणात्। "यत्र नान्यत् पश्यति" इति श्रुतिविहितलक्षणमपि सुषुप्त्यवस्थायां सर्वव्यापारनिवृत्तिदर्शनात् सम्भवति।

ननु — "श्रुतं ह्येव भगवद्दृशेभ्यस्तरति शोकमात्मवित्" इति, "सोऽहं भगव शोचामि तं मा भगवान् शोकस्य पारं तारयतु" इति च ब्रह्मलिङ्गबाहुल्यान्महेश्वर एव भूमा इति चेन्न, प्राणो ब्रह्मेति नारद-सनत्कुमारप्रश्नप्रतिवचनद्योतनात्। तथा हि — "अस्ति भगवो नाम्नो भूयः" इति, "वाग्वाव नाम्नो भूयसी" इति, "अस्ति भगवो वाचो भूयः" इति, "मनो वाव वाचो भूयः" इति च भूयःप्रश्नप्रतिवचनाभ्यां प्राण एवात्र भूमशब्दनिर्दिष्ट इति चेदुच्यते—भूमा परमेश्वर एव। कुतः ? सम्प्रसादादध्युपदेशात्। सम्प्रसादः सुषुप्तिः, "स वा एष एतस्मिन् सम्प्रसादे रन्त्वा चरित्वा" इति श्रुत्या, सम्यक् प्रसादोऽस्मिन्निति सम्प्रसाद इति व्युत्पत्त्या च सम्प्रसादः सुषुप्त्यवस्था, तस्यां च प्राणो जागर्तीति सम्प्रसादः प्राण इत्यभिप्रेतः। तस्माद् अधि प्राणादूर्ध्वम्, उपदेशात् कथनात्, प्राणोपदेशान्तरम् — "एष तु वातिवदति, यः सत्येनातिवदति" इत्यत्र तुशब्देन प्राणाद्यतिवादित्वं व्यावर्त्य सत्यशब्दवाच्यपरमात्मवादस्यातिवादत्वमुक्त्वा भूमानमवतारयति। किञ्च — "तरति शोकमात्मवित्" इत्यादिनाऽऽत्मज्ञानेन मोक्षस्योपदिश्यमानत्वात्, जडप्राणवायोर्मोक्षानुपयुक्तत्वात्, आत्मशब्दस्य परशिवप्रसिद्धत्वात्, "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिषु शिवज्ञानस्यैव मोक्षोपदेशाच्च भूमा परमेश्वर एव।।८।।

भूमशब्दवाच्यत्वं परमेश्वरस्यैवेत्यत्र हेत्वन्तरमाह —

## धर्मोपपत्तेश्च ।।९।।

भूम्नि श्रूयमाणधर्माणां परमात्मन्युपपद्यमानत्वात् परशिव एव भूमा, "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यादिना सृष्टेः पूर्वं सर्वव्यवहाराभावादिधर्माणां शिवस्योपपद्यमानत्वात्, "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन

कं पश्येत्, केन किं वदेत्'' इत्यादिश्रुत्यन्तरेण सर्वशिवात्मकज्ञानवतां प्राकृतप्रपञ्चव्यवहाराभावो मुक्तजीवधर्म इत्यवगम्यते। अत एव — ''तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्'' इति शिवोपासकस्य शुद्धचित्तस्यात्यन्तिकपाशनिवृत्तिपूर्वकशिवसायुज्यं नदीसमुद्रदृष्टान्तेन निर्दिष्टम्। सर्वप्रपञ्चस्य शिवत्वेन पश्यतां शिवातिरिक्तस्य कस्यचिदभावात् प्रपञ्चनिषेधकश्रुतीनामपि प्रामाण्यमवगन्तव्यम्।

ननु ''यावन्न विमोक्ष्येऽथ सम्पत्स्ये'' इति वाक्येन जीवन्मुक्तस्य विदेहमुक्तिपर्यन्तं प्रपञ्चभोगव्यपदेशात् कथं जीवन्मुक्तानां प्रपञ्चनिषेध उपपद्यते? इति चेन्न, जीवन्मुक्तानां शिवज्ञानिनां सर्वस्य शिवात्मकत्वेन दर्शनात्, तेषां देहाद्यन्तःकरणसद्भावेऽपि सर्वशिवात्मकज्ञानसद्भावात्, जगदात्मकः शिवोऽहमिति विद्वदनुभवाच्च प्रपञ्चस्य शिवातिरिक्तत्वेन निषेधानुभवस्तेषां युज्यते। ''यदा त्वन्मय एवाहमिति भावनया त्वयि। प्रलीनाहङ्कृतिग्रन्थिः पश्यत्येव त्वदात्मताम्।।'' इति।

ननु शिवोऽहमिति वृत्तेः शक्तिसङ्कोचरूपबन्धतिरोधायकत्वे भवदुक्तरीत्या तस्यापि तिरोधायकान्तरं स्वीकरणीयमित्यनवस्था स्यात्, अन्यथा द्वैतापत्तेः, इति चेन्न, तादृशचित्तवृत्तेरचित्तस्वरूपत्वात्, तस्य चितिस्वरूपत्वात्। उक्तं च शिवसूत्रे — ''चित्तमात्मा'' इति। स्पन्दसूत्रेऽपि — ''चितिरेव चेतनपदादवरूढा चैत्यसङ्कोचिनी चित्तम्'' इति। 'नहि दृष्टेऽनुपपन्नम्' इति न्यायेन जीवन्मुक्तानां सर्वशिवात्मकदृष्टिर्नानुपपद्यते, शिवस्य प्रपञ्चनिरूपिताभिन्ननिमित्तोपादानकारणत्वाद् जगदभिन्नः शिवोऽहमिति दृष्टिः सम्भवति। ''यो वै भूमा तत्सुखं नाल्पे सुखमस्ति'' इति भूम्नः सुखत्वं दर्शितम्। ''यो वै भूमा तदमृतम्'' इत्यमृतत्वमपि परमशिवासाधारणो धर्मः। किञ्च — ''स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि'' इति, ''आत्मैवेदं सर्वं आत्मतः प्राणाः'' इत्यादिना सृष्ट्युत्तरकाले तस्यैव स्वशक्त्युन्मेषरूपे जगति स्वमहिम्नि प्रतिष्ठितत्त्वसर्वकारणत्वसर्वात्मकत्वादिधर्माणां कथनाद् भूमशब्दनिर्दिष्टः परशिव एव। एतादृशधर्मविशिष्टभूम्नो ध्यानादिकं गुरुमुखाद्विदित्वा योऽनुतिष्ठति, तदा शक्तिविकासरूपमुक्तिं भजति। उक्तं च श्रीकुलरत्नमालायाम् —

यदा गुरुवरः सम्यक् कथयेत्तन्न संशयः ।
मुक्तस्तेनैव कालेन यन्त्रं तिष्ठति केवलम् ।।
किं पुनश्चैकतानस्तु परे ब्रह्मणि यः सुधीः ।
क्षणमात्रस्थितो योगी स मुक्तो मोचयेत् प्रजाः ।।

मृत्युजित्यप्युक्तम् —

निमेषोन्मेषमात्रं तु तत्त्वं यद्युपलभ्यते ।
तदैव किल मुक्तोऽसौ न पुनर्जन्म चाप्नुयात् ।।

उक्तं च कुलशास्त्रेऽपि —

अहो तत्त्वस्य माहात्म्यं ज्ञातमात्रस्य सुन्दरि ।
श्रोत्रान्तरं तु सम्प्राप्ते तत् क्षणादेव मुच्यते ।। इति।

ननु तदानीं शरीरादिकमप्यस्य जीवन्मुक्तस्य कथं न निवर्तते? इत्याशङ्कायामपि "नैसर्गिकः प्राणसम्बन्धः" इति शिवेन सूत्रितम्। तथा च भूमपदवाच्यलिङ्गरूप-परमशिवार्चनार्पणानुभवादिना सङ्कुचितचित्तं कुण्डल्यपरपर्यायं विकासयन् सच्चिदानन्दभाग् भवतीत्यर्थः।।९।।

ब्रह्मणः परमशिवस्य सर्वव्यापकत्वमुपदिश्याक्षरशब्दवाच्यत्वमप्याह —

## अक्षरमम्बरान्तधृतेः ।।१०।।

"स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमतो हि तमस्नेहमच्छायम्" इत्यत्र यदक्षरमुक्तम्, तत्परब्रह्म, अम्बरान्तधृतेः = अम्बरान्तस्य स्वशक्तिप्रकटीकृतस्य विश्वस्य धृतेर्धारणात्। यद्यपि "ओमित्येकाक्षरं ब्रह्म", "ओङ्कार एवेदं सर्वम्", "तदक्षरसमाम्नायः" इत्यादिषु वर्णस्य ओङ्कारस्य ब्रह्मात्मकत्व-सर्वात्मकत्वादिदर्शनाद् अक्षरशब्दवाच्यत्वं ओङ्कारस्य, "पुरुषोऽक्षर उच्यते" इत्यादिना पुरुषस्यापि सम्भवति, तथाप्यत्र पृथिव्याद्याकाशान्तस्य सर्वप्रपञ्चस्य धारकत्वासम्भवात् "ओङ्कार एवेदं सर्वम्" इति श्रुतेः सर्वात्मकब्रह्मवाचकत्वेन स्तुत्यर्थत्वं वाच्यम्।।१०।।

अम्बरान्तधृतेः प्रधानेऽपि सत्त्वात् तत्रातिव्याप्तिमाशङ्क्य परिहरति —

## सा च प्रशासनात् ।।११।।

सा आकाशान्तधृतिः परशिवस्यैव, कुतः? प्रशासनात् = नियमनात्। न ह्यचेतनप्रधाने एतादृशी नियमनशक्तिः सम्भवति। दृष्टं च लोके राजादिषु नियमनशक्तिमत्त्वम्। वेदेऽपि — "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिनोक्तं प्रशासनं परशिवादन्यत्र नैव सम्भवति। जीवोऽपि नाक्षरशब्दवाच्यः, तस्यासर्वज्ञत्वादसर्वशक्तिकत्वात्, जगत्प्रशासनशक्तिमत्त्वासम्भवात्। सर्वशक्तिकस्य सर्वज्ञस्य परमेश्वरस्य तु सर्वनियामकत्वं सम्भवति। सर्वनियामकत्वं चोक्तम् — "ईशानः

सर्वविद्यानामीश्वरः सर्वभूतानाम्'' इत्यादिना। सर्वशक्तिकत्वं च — ''परास्य शक्तिर्विविधैव श्रूयते'' इत्यादिनोक्तम्। उक्तं च श्रीपौष्करायाम् —''चिन्तामणौ स्वरूपेण न किञ्चिदुपलभ्यते। अथ चाभिमतं सूते ब्रह्मैवं सर्वशक्तिकम्।।'' ज्ञानसम्बोधेऽपि — ''स्वभावादेकरूपापि नानात्वं प्रतिपद्यते। ज्ञानस्य शक्तिसङ्कल्पैर्लक्ष्मीश्चिन्तामणेरिव।।'' अनेन सूत्रेण पृथिव्याद्याकाशान्तप्रपञ्चाधिष्ठानशिवस्य नियमनशक्तिमत्त्वमुपदिष्टम्, निःशक्तिकस्य धृत्यसम्भवात्। ''स्वाभाविकी ज्ञानबलक्रिया च'' इत्यादिना शक्तेः स्वाभाविकत्वोपदेशाद् ब्रह्मणो निर्विशेषत्ववादोऽप्ययुक्तः। दाहानुकूलशक्तेर्वह्नेरविभक्तत्वेऽपि ''वह्निर्दहति'' इत्यत्र भेदव्यवहारवत् शक्तिशक्तिमतोर्भेदाभेदः सिद्धः।।११।।

पुनर्हेत्वन्तरमाह —

## अन्यभावव्यावृत्तेश्च ।।१२।।

परशिवस्यैवाक्षरशब्दवाच्यत्वं तस्यैवाम्बरान्तधृतित्वं च, नान्यस्य कस्यचित्; ''अन्यभावव्यावृत्तेः'' अन्यस्य प्रधानादेरपि भावो धर्मः, तस्य व्यावृत्तेरचेतनप्रधानधर्मभिन्नद्रष्टृत्वादिधर्मश्रवणात्। तथाहि — ''तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ'' इति। तस्माद् अक्षरशब्दवाच्यशिवलिङ्गस्यैव जन्मकर्मनिवर्तकत्वात् तदेवोपास्यं स्वाङ्गाविनाभूतं शुद्धमानसैरित्यर्थः।।१२।।

शिवस्यानुग्रहेणोपासकस्य शिवसाक्षात्कारो भवतीत्युपपादयितुमधिकरणान्तर मारभते —

## ईक्षतिकर्मव्यपदेशात् सः ।।१३।।

''यः पुनरेतं त्रिमात्रेण'' इत्यादिश्रुतौ परं पुरुषमभिध्यायीतेत्यत्राभिध्यानविषयत्वेनोक्तः परशब्दवाच्यः शिव एव, न हिरण्यगर्भो न वा नारायणः। ''एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते'' इति वाक्ये जीवघनाद् जीवसमष्ट्यात्मकहिरण्यगर्भात् परस्य ध्येयत्वोक्तेर्न तस्य परत्वम्। नारायणस्यापि न युज्यते, ''ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते'' इत्यत्र ब्रह्मविष्णुकालरुद्रादीनां कार्यकोटिप्रविष्टत्वदर्शनात्।

ननु ''नारायणं महाज्ञेयं विश्वात्मानं परायणम्'' इत्यादिना तस्य विश्वात्मकत्वश्रवणात् पुरुषशब्दवाच्यत्वाच्च तस्यैवाभिध्यानविषयत्वमस्तु? इति चेन्न, ''एतस्माद् जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते'' इत्यत्र जीवघनाद् हिरण्यगर्भात्, परात् उत्कृष्टात्

नारायणात्, परं उत्कृष्टम्, पुरि दहरपुण्डरीके शयम् उपास्यत्वेन वर्तमानमत एव पुरुषं परशिवम्, ''ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षम्'' इत्यादिश्रुतेः, शिवोपासकः, ईक्षति पश्यति, इति निर्देशान्न नारायणस्योपास्यत्वम् ''एक एव शिवः साक्षात्ततोऽन्यत्सकलं मृषा। तस्मात् सर्वान् परित्यज्य हेयान् विष्ण्वादिकान् सुरान्।। शिव एव सदा ध्येयः सर्वसंसारनाशकः।'' इति श्रुतेः, ''सर्वमन्यत्परित्यज्य शिव एको ध्येयः शिवङ्करः'' इति श्रवणाच्च। न नारायणस्योपास्यत्वम् ''नारायणः परं ब्रह्म तत्त्वं नारायणः परः'' इत्यादौ परमशिवोपासकस्य नारायणस्य श्वेतकेत्वादाविव औपचारिकत्वेन ब्रह्मत्वेनोपदेशात्, ''नारायणपरं ब्रह्म'' इत्यत्र नारायणाद् यत्परम् उत्कृष्टम्, तद् ब्रह्म इत्युपदिशति। ''तद्विष्णोः परमं पदम्'' इति वाक्येऽपि तस्य श्रेष्ठत्वावगमाद् नारायणादधिकं शिवपदं मुमुक्षुभिरुपास्यम्।

किञ्च, विश्वात्मानं परायणमित्युक्तं विश्वात्मकत्वमपि नारायणस्योपमाशक्त्यंशत्वादुपपन्नं भवति, ''पुरुषो वै रुद्रः'', ''वासुदेवः परा प्रकृतिः'', ''एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले। भोगे भवानी पुरुषेषु विष्णुः क्रोधे च काली समरे च दुर्गा।।'' इत्यादिना शिवशक्त्यंशत्वं स्पष्टमुक्तम्। तस्मादीक्षतिकर्मतयोपदिश्यमानः परशिव एव सर्वोपास्यः ।।१३।।

परशिवस्य भक्तानुग्रहाय दहरात्मकत्वमित्याह —

## दहर उत्तरेभ्यः ।।१४।।

''यदिदमस्मिन्'' इत्यादिश्रुतावन्तर्धार्यत्वेनोक्तं दहराकाशशब्दवाच्यं वस्तु परशिवलिङ्गमेव। नन्वाकाशस्य भूताकाशे प्रसिद्धत्वात् सूचीरन्ध्रादिवत् तस्य दहरत्वात् सर्वव्यापकस्याप्याकाशस्यान्तःप्रविष्टत्वेन दहरवाच्यत्वं भूताकाशस्य, ''यदिदमस्मिन् ब्रह्मपुरे दहरम्'' इत्यादिना जीवे ब्रह्मपुरमिति ज्ञायमानत्वात्, ''यस्यात्मा शरीरम्'' इति श्रवणात्, ''वालाग्रशतभागस्य शतधा कल्पितस्य च। जीवो भागः'', ''एषोऽणुरात्मा चेतसा वेदितव्यः'' इत्यादिना जीवस्य क्षुद्रपरिमाणकत्वदर्शनाद् दहरशब्दवाच्यत्वमस्तु? इति चेत्, उत्तरेभ्यः, हेतुभ्य इति शेषः। ''एष त आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः'' इति वाक्ये शेषप्रसिद्धहेतुभ्यः। तथा च अपहतपाप्मत्वादीनां धर्माणां भूताकाशजीवयोरनुपपद्यमानत्वान्न तयोर्दहरशब्दवाच्यत्वमित्यर्थः ।।१४।।

शिवस्यैव दहरशब्दवाच्यत्वमित्यत्रोत्तरहेतुघटकहेतुद्वयमाह —

**गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ।।१५।।**

गतिश्च शब्दश्च गतिशब्दौ, ताभ्यामित्यर्थः। "इमाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति अनृतेन हि प्रत्यूढाः" इति वाक्यशेषोक्ताभ्यां दहराकाशकर्मकगति-ब्रह्मलोकशब्दाभ्यां दहरशब्दवाच्यं शिवलिङ्गमेव। तथा ह्येतद्दृष्टं श्रुत्यन्तरे — "एषोऽसौ परमो हंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तम्। तस्याष्टधा वृत्तिर्भवति — पूर्वदले पुण्यमतिः, आग्नेये निद्रालस्यादयो भवन्ति, याम्ये क्रौर्यमतिः, नैर्ऋत्ये पापे मनीषा, वारुण्यां क्रीडा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः, ऐशान्ये द्रव्यादानम्, मध्ये वैराग्यम्, केसरे जाग्रदवस्था, कर्णिकायां स्वप्नः, लिङ्गे सुषुप्तिः" इत्यत्र हृत्पुण्डरीकान्तर्वर्तिदहराकाशरूपपरशिवलिङ्गगमनं दृष्टमित्यर्थः। लिङ्गब्रह्मशब्दयोः घटकुम्भादिवत् पर्यायत्वात् प्रत्यहं सुषुप्तौ प्रजाशब्दवाच्यजीवानां ब्रह्मणि गमनं दृष्टम्। तदेव दहराकाशपदवाच्यस्य ब्रह्मत्वे लिङ्गं हेतुः। ब्रह्मलोकमित्यत्रापि ब्रह्मैव लोकमित्यर्थो बोध्यः। अन्यथा महाकैलासाभिधानं ब्रह्मणः शिवस्य लोकं प्रति प्रत्यहं गमनासम्भवाद् "अहरहर्गच्छन्ति" इत्यस्याप्रामाण्यं स्यात्, "एष ब्रह्मलोकः सम्राडिति होवाच" इत्यादौ ब्रह्माभिन्नो लोक इत्यवगमाच्च। तथा च दहराकाशवाच्यान्तर्लिङ्गधारणा-परपर्यायज्योतिर्लिङ्गानुसन्धानं प्रत्यहं कर्तव्यमिति।।१५।।

अस्मिन्नर्थे हेत्वन्तरमाह —

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ।।१६।।**

धृतेः सर्वलोकविधारकत्वात्, "अथ य आत्मा स सेतुर्विधृतिरेषां लोकाना-मसम्भेदाय" इति श्रुतेः। अस्य सर्वलोकविधारणरूपस्य महिम्नोऽस्मिन् प्रकृतदहरपदवाच्ये उपलब्धेः, उपलभ्यमानत्वात्। "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यत्र सर्वलोकविधारणरूपमहिमा दृश्यते। स च शिवादन्यत्र न सम्भवतीत्यतो दहराकाशवाच्यं शिवलिङ्गमेव।।१६।।

किञ्च, "दहरोऽस्मिन्नन्तराकाशः" इत्युक्तदहराकाशवाच्यः परशिव एवेत्यत्र हेत्वन्तरमाह —

**प्रसिद्धेश्च ।।१७।।**

श्रुत्यन्तरे दहराकाशः परशिव एवेति प्रसिद्धेरित्यर्थः। तथा हि — "दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्। तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्।।" इत्यत्र, "हृत्पुण्डरीकं विरजं विशुद्धम्" इत्यारभ्य "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिम्" इत्यत्रापि प्रसिद्धत्वात्।

ननु दहराधिकरणे विषयत्वेन गृहीतो दहरोऽस्मिन्नन्तराकाश इति विषयवाक्येन दहराकाशशब्दवाच्यत्वं शिवस्य ज्ञायते, पूर्वोक्तसूचीरन्ध्रकैवल्यवाक्याभ्यां दहर-पुण्डरीकमध्यवर्तित्वेन ज्योतिर्लिङ्गस्योपास्यत्वं प्रतीयते, तथा च विरुद्धार्थप्रति-पादकवाक्यानामप्रामाण्यापत्तिरिति चेन्न, दहराकाशशब्देन चिदाकाशशक्तिरुच्यते। "आकाशशरीरं ब्रह्म सत्यात्म प्राणारामं मनआनन्दम्" इत्यादिना चिदाकाशशरीरत्व-स्योपदेशात्, शक्तिशक्तिमतोरभेदात्। उक्तं च कूर्मे —

"कैषा भगवती देवी शङ्करार्धशरीरिणी। शिवा सती हैमवती यथावद् ब्रूहि पृच्छताम्।।" इति प्रश्ने कूर्म आह — "रहस्यमेतद्विज्ञानं जन्तूनामेकमोचनम्। व्योमसंज्ञा पराकाष्ठा ज्ञानरूपातिलालसा।। स्वाभाविकी च तन्मूला प्रभा भानोरिवामला। एका माहेश्वरी शक्तिरनेकोपाधियोगतः।। परापरेण रूपेण क्रीडते तस्य सन्निधौ। सोऽयं करोति सकलं पश्य कार्यमिदं जगत्।। एका शक्तिः शिवो ह्येकः शक्तिमानुच्यते शिवः।। शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः। अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः।।" इति।

तत्रैव देवीवाक्यमपि — "मां विद्धि परमां शक्तिं महेश्वरसमाश्रयाम्। अनन्या-मव्ययामेकां यां पश्यन्ति मुमुक्षवः।। अहं वै सर्वभूतानामात्मा सर्वान्तरा शिवा। शाश्वतैश्वर्यविज्ञानमूर्तिः सर्वप्रवर्तिका।।" इत्यादिना कूर्मपुराणे। नारायणेन "धृतकाठिन्यवन्मूर्तिः सच्चिदानन्दलक्षणा। शिवाभिधेन सैवास्ति शिव एव हि सा सदा।।" इति सूतगीतायां च द्वैताद्वैतात्मकशिवाद्वैतस्य प्रतिपादितत्वात्, शिवस्य दहरात्मकत्वदहरमध्यवर्तित्वयोरविरोधात्, दहराकाशमध्यवर्तित्वेन प्रसिद्धे-रित्यर्थः।।१७।।

अन्यव्यावृत्तिपुरस्सरं पुनर्विवेचयति —

**इतरपरामर्शात् स इति चेन्नासम्भवात् ।।१८।।**

इतरस्य शिवादन्यस्य जीवस्य परामर्शात्, "अथ च एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते, एष आत्मेति होवाच तदमृतमभयम्" इति वाक्ये सम्प्रसादशब्दवाच्यसुषुप्त्यवस्थावज्जीवस्य उपस्थितेः स जीव एव दहराकाशः, तस्यैव हृत्पुण्डरीकान्तरुपास्यत्वम्? इति चेन्न, असम्भवात्। अपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्माणां तत्रासम्भवादित्यर्थः।।१८।।

असम्भवेन हेतुना जीवाशङ्कावारणेऽपि पुनरुत्तरप्रजापतिवाक्येऽपहतपाप्मत्वादि-धर्मको जीव एवेत्यवस्थात्रयवर्तित्वलक्षणेन हेतुनाऽऽशङ्क्य सङ्कुचितचितिरूप-चित्तविशिष्टसंसारिणो जीवस्य विकसितस्वशक्तिदशायामपहतपाप्मत्वादयो धर्माः सम्भवन्तीति समाधत्ते —

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ।।१९।।

उत्तरात् प्रजापतिवाक्यात्, जीव एव दहराकाशः। उत्तरवाक्ये "य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति स सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति" इति जीवस्यापहतपाप्मत्वादीनां सम्भवात्, "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाच, तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः सुप्तं न विजानात्येष आत्मेति होवाच" इत्युक्तावस्थान्तरवर्तित्वस्य जीवस्यैवोपपद्यमानत्वात् स एव दहराकाश उपास्यः, तस्यैव शरीरात् समुत्थितस्य परंज्योतिःप्राप्त्यभिधानात्, इति चेन्न, आविर्भूतस्वरूपस्तु, तुशब्दो पूर्वपक्षनिरसनार्थः। आविर्भूतं विकल्पक्षयाद्युपायगर्भलिङ्गधारणात्मकशिवदीक्षया विकसितं स्वस्य आत्मीयस्य रूपं पञ्चकृत्यकारित्वं यस्य, स मुक्तोऽपहत-पाप्मत्वादिपारमेश्वरधर्मानर्हति, अर्थात् शिवभावापन्नजीवन्मुक्तं शिवरूपतया "एष सम्प्रसादः" इत्यादिश्रुतिर्व्याचष्टे, तस्यैवापहतपाप्मत्वादिधर्माणां सम्भवात्। स्वशक्तिसङ्कोचरूपाख्यात्यात्मकबन्धविशिष्टस्य जीवस्य पारमेश्वरधर्मासम्भवाज्जीव उत्तरवाक्याद् दहराकाश इति वक्तुं शक्यते। जीवो यदाविर्भूतस्वरूपो भवति, तदा तस्य शिवरूपत्वात् तादृशस्यैव रूपमुद्दिश्यैव "अयमात्मा अपहतपाप्मा विजरो विमृत्युः" इत्यादिश्रुतिः, न तु जैवरूपमपहतपाप्मत्वादिकं व्यनक्ति। "आविर्भूतस्वरूपस्तु" इति वदता भगवता व्यासेन भावी मिथ्यात्ववादः खण्डित इति स्फुरति।

अयमत्राशय आस्माकीनसिद्धान्ते व्यक्तो भवति — जीवो नाम परशिवस्य स्वलीलास्वातन्त्र्यसङ्कुचितेच्छादिशक्तिविशिष्टत्वदशायां मलावृतत्वात् शिव एव संसारी जीव इत्युच्यते। तथा चाप्रतिहतस्वातन्त्र्यरूपेच्छाज्ञानक्रियाशक्तीनां शिवासाधारणानां क्रमेण सङ्कोचप्राधान्यप्रयुक्ताणवमायीयकार्ममलत्रयरूपत्वात्, तथा सर्वकर्तृत्व-सर्वज्ञत्वपूर्णत्वनित्यत्वव्यापकत्वशक्तीनां यथाक्रमं सङ्कोचप्राधान्येन कला-विद्या-राग-काल-नियतिरूपत्वात्, ''सर्वस्वतन्त्रता सर्वज्ञता सम्पूर्णता तथा। नित्यता व्यापिता चेति पञ्चैता शक्तयः प्रभोः।। अपि सङ्कोचरहिताः सङ्कुचद्रूपतां गताः। कलाविद्या-रागकालनियत्याख्या क्रमेण ताः।।'' इत्युक्तत्वात्। एतादृशसङ्कुचितशक्तिविशिष्टो मलावृतो जीव इति बोध्यम्, मलत्रयस्यैव बन्धत्वात्। तदुक्तम् — ''ज्ञानं बन्धः'', ''योनिवर्गः कलाशरीरम्'' इति सूत्रद्वयेन। ज्ञानमत्र नाहं शिव इति शिवाभेदस्फुरणावरकस्वस्वातन्त्र्यशक्तिपरिकल्पितसङ्कोचरूपाख्यात्यात्मकाज्ञानस्वरूपं नाहं पूर्ण इत्यपूर्णम्मन्यत्वरूपाणवमलसहितत्वसङ्कुचितज्ञानम्।

नन्वेतस्य बन्धस्य चित्प्रकाशातिरिक्तत्वे तस्याचेत्यमानत्वाद् अन्याभ्युपगत-चित्प्रकाशभिन्नमायाप्रकृत्यादेरिवासत्त्वात् तदनतिरिक्तत्वे प्रकाशमानत्वेन प्रकाशैकरूपत्वात् कथं जीवस्य बद्धत्वमिति चेन्न, ''चितिसङ्कोचात्मा चेतनोऽपि सङ्कुचित विश्वमयः'' इति सूत्ररीत्या विश्वशरीरशिवैकरूप एव जीवः। केवलं तन्मायाशक्त्याऽनाविर्भूतस्वरूपत्वाद् जीवस्य स्वाभाविकबद्धत्वव्यवहारः। आविर्भूतस्वरूपस्तु शिव एव। तिरोहितस्वरूपत्वे जीव इति तद्दशायां चितिसङ्कोचरूपचित्तविशिष्टत्वाज्जीवस्य स्वाभेदेन हृत्पुण्डरीकादौ शिवलिङ्गधारणवत्त्वम्, एतादृशान्तर्लिङ्गधारणाद् बाह्यलिङ्गधारणाविनाभूताद् दीक्षागुरुनिर्दिष्टोपायाच्चित्तस्य चितिरूपत्वे मुक्तः शिव एव । नहि चित्तस्य चितेरधिष्ठानस्यान्यथाभाव उपपद्यते, तदतिरिक्तस्य गगनकुसुमायमानत्वात्। उक्तं चाभियुक्तैः— ''अख्यातिर्यदि न ख्यातिः ख्यातिरेवावशिष्यते। ख्यातिश्चेत् ख्यातिरूपत्वात् ख्यातिरेवावशिष्यते।।'' इति।

शिवसूत्रविमर्शिन्यामपि — ''यथा च व्यतिरिक्तस्य मलस्यानुपपन्नत्वम्, तथास्माभिः श्रीस्वच्छन्दोद्योते पञ्चमपटलान्ते दीक्षाविचारे वितत्य दर्शितम्'' इति। चित्तस्य चितिसङ्कोचत्वमपि ''चितिरेव चेतनपदादवरूढा चेत्यसङ्कोचिनी चित्तम्'' (प्र०सू०५) इति सूत्रेणोक्तम्, ''चित्तमात्मा'' इति शिवेनापि सूत्रितम्। पदवाक्यप्रमाणज्ञेन मरितोण्ट-दार्येणापि शिवजगन्मयस्थले — ''पत्रशाखादिरूपेण यथा तिष्ठति पादपः। तथा भूम्यादिरूपेण शिव एको विराजते।।'' इत्यस्य श्लोकस्य व्याख्यानावसरे शिव एव

स्वसमवेतशक्तितादात्म्यक्रोडीकृतभूम्यादिरूपेण प्रतिस्फुरणगत्या भातीति सामान्यत उक्त्वा विशेषतश्च धृत्या धरणिः, करुणया जलम्, उज्ज्वलतया तेजः, परमानन्दस्पन्दनतया वायुः, चिद्व्याप्त्या व्योम, चितिसङ्कोचचित्तविशिष्टो जीव इति चित्तस्य चितिसङ्कोचरूपत्वमुक्तम्। मायाप्रमातुर्जीवस्य स्वरूपमेव चित्तम्। चित्तस्वरूप एव मायाप्रमाता, परस्परं साक्षित्वात्, चित्तशक्तिशक्तिमतोर्भेदाभेदस्य विवक्षिततत्वात्। उक्तं च प्रत्यभिज्ञासूत्रे — "तन्मयो मायाप्रमाता" इति। उक्तं च मोक्षधर्मे — "चित्तमेव हि संसारो रागादिक्लेशभूषितम्। तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते।।" इति। बौद्धे च — "रागादिमलिनं चित्तं संसारस्तद्विविक्तता। संक्षेपात्कथितो मोक्षः प्रहीणावरणैर्जिनैः।।" इति। नारदसंग्रहे च — "सर्वो विकल्पः संसारो नान्यो बन्धो विकल्पतः" इति । एतदभिप्रायेण शिवसूत्रेऽपि चित्तमात्मेत्युक्तम्।

नन्वेतत् स्वाभाविकपरमेश्वरस्वरूपस्य पञ्चकृत्यकारित्वस्य चित्तदशायां तिरोहितत्वे संसारित्वदशायां स्वरूपहानिरिति चेन्न; सङ्कुचितचिच्छक्तितया संसारिभूमिकायामपि शिववत् किञ्चित् पञ्चकृत्यकारित्वस्य दर्शनात्, तथापि तद्वत् पञ्चकृत्यानि करोतीति सूत्रेणोक्तम्। आत्मीयपञ्चकृत्यकारित्वस्य तिरोधानदशायामस्य बन्धः। तदुक्तं तृतीयाध्याये — "पराभिध्यानात्तु ततो ह्यस्य बन्धविपर्ययौ" इति। एतादृशचितिसङ्कोचरूपचित्तात्मकबन्धस्य दीक्षात्र्यःविलयत्वे "परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते" इति स्वेन रूपेण पञ्चकृत्यकारित्वेन स्वरूपेणाभिव्यक्तिर्भवतीत्यर्थः। तदुक्तं तत्त्वप्रकाशिकायाम् — "योजयति परे तत्त्वे दीक्षयाचार्यमूर्तिस्थः" इति। उक्तं च प्रत्यभिज्ञासूत्रे — "तत्परिज्ञाने चित्तमेवान्तर्मुखीभावेन चेतनपदाध्यारोहाच्चितिः" इति। गुरुमुखात्तु स्वस्वरूपपरिज्ञानेऽख्यातिलक्षणकारणापसरणात् स्वशक्तिव्यामोहितृत्वरूपसंसारित्वनिवृत्तौ स्वातन्त्र्यलाभाच्चित्तमेव बहिर्मुखतारूपसङ्कोचं जहदन्तर्मुखत्वेन चेतनपदाध्यारोहात् क्रमेण सङ्कोचकलाया अपि विगलनेन स्वरूपापत्त्या चितिर्भवति, अर्थाच्चिच्छक्तिरूपां परां भूमिमाविशति। तथा चोक्तम् —"स पुनः शाम्भवेच्छातः शिवाभेदं परामृशन्। क्रमान्मन्त्रेशतन्त्रेतृरूपां याति शिवात्मताम्।।" इति। आचार्यमूर्तिस्थः श्रीगुरुः शिष्यगतं शक्तिपातं दृष्ट्वा कृत्वा वा दीक्षापुरस्सरं शिष्यस्य शिवाभेदं ज्ञापयति। तदा शिवाभेदं परामृशन् क्रमात् शिवतामाप्नोति। उक्तं च दीक्षालक्षणगुरुकारुण्यस्थले — "इति शुद्धेन शिष्येण प्रार्थितः परमो गुरुः। शक्तिपातं समालोक्य दीक्षया योजयेदमुम्।। दीयते च शिवज्ञानं क्षीयते पाशबन्धनम्। यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः।।" दीक्षया नाहं शिवो नाहं पूर्ण इत्याद्याकारकमलमायापाशबन्धनविलये शिवस्वरूपज्ञानलाभे शिव एव भवति । एष च दीक्षाविचारः क्रियासारादौ विस्तरतः प्रदर्शितो

नीलकण्ठशिवाचार्यादिभिस्तत एवावगन्तव्यः। तथा च दीक्षया आविर्भूतस्वरूपो यदा भवति, तदा तस्य जीवत्वाभावाद् ब्रह्मधर्मोपदेशस्य युक्तत्वात् तस्य ब्रह्मत्वात्, "तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"; "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिषु मुक्तस्य शिवत्वं सूचितम्। "अन्तर्बहिश्च तत्सर्वं परिपूर्णं महेश्वरम्। भावयेत् परमानन्दलब्धये पण्डितोत्तमः।। शिवोऽहमिति भावो हि शिवतापत्तिकारणम्। न ज्ञानमात्रं नाचारो भावयुक्तः शिवो भवेत्।।" इति।

ज्ञानं वस्तुपरिच्छेदो ध्यानं तद्भावकारणम् ।
तस्माद् ज्ञानी महादेवे ज्ञानयुक्तो भवेत् सुधीः ।।
नैरन्तर्येण सम्पन्नो भवेद् ध्यातुं शिवं प्रति ।
तद्भावो जायते यद्वत् कृमेः कीटस्य चिन्तनात् ।।
गुरोः कटाक्षवेधेन शिवो भवति मानवः ।
रसवेधाद् यथा लोहो हेमतां प्रतिपद्यते ।।

इत्यादिस्मृतिरपि मुक्तस्य शिवात्मकत्वं ब्रूते।

इदमत्र ज्ञातव्यम् — ज्ञानक्रियाशक्तिरूपशिवदीक्षया तत्सङ्कोचप्रयुक्तमलविगलने सति जीवस्याविर्भूतस्वरूपत्वात् शिवः, न तु शुद्धस्फटिकस्य स्वाच्छ्यशौक्ल्यरूपं प्राग्विवेकग्रहणाद् रक्तनीलाद्युपाधिभिरभिव्यक्तमिव भवति, विवेकग्रहणात् स्फटिकः शौक्ल्येन स्वेन रूपेणाभिनिष्पद्यते, तथैव देहाद्युपाध्यविविक्तस्य जीवस्य श्रुतिकृत-विवेकज्ञानं शरीरात् समुत्थानम्, तत्फलस्वरूपेणाभिनिष्पत्तिर्नाम केवलात्मस्वरूपा-वगतिः, विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन् विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते, "तं ध्यात्वा मृत्युमतीत्य नान्यः पन्था विमुक्तये" इति, "तं ध्यात्वा मुनिर्गच्छति भूतयोनिम्" इति च कैवल्यश्रुतेः। "यदि वाचनिकज्ञानान्मुक्तिः स्याद्भावनां विना। शारीरमानसैर्दुःखैर्मुच्येरन् सर्वजन्तवः।।" इति। अन्या च युक्तिः —"रसायनं विना स्वेदात् सूचितं ह्यपि सिद्धिदम्" इति। अन्यच्चोक्तम् — "आगोपबालवनितं भगवंस्त्वमित्थं ज्ञातोऽप्युपायविरहान्न तु मोक्षदोऽसि। नान्तःस्थितं भवति धेनुषु तृड्विहन्तृ क्षीरं तदेव पुनरभ्यवहारतः स्यात्।।" इति स्वस्वरूपावरकाज्ञानस्याऽन्यथाऽनिर्वचनी-यताख्यातित्वाभावात्। अस्मन्मते शिवजीवयोर्भेदस्य मिथ्याज्ञानकृतत्वाभावात्, शिवशक्तिस्वातन्त्र्यपरिकल्पितसङ्कोचकृतत्वात्, तयोरभेदस्य विकसितस्वशक्ति-दशायामुपपन्नत्वात्, कूर्माङ्गभङ्गि-अहिकुण्डल-स्वर्णकुण्डलन्यायादिभिः स्वरूपस्यैव

स्वेच्छयाऽसङ्कोचस्वरूपस्यैवाविर्भाव इति, "आविर्भूतस्वरूपस्तु" इत्युक्त्या ज्ञायमानत्वात्। तथा चाविर्भूतस्वरूपोऽपहतपाप्मत्वादिधर्मानर्हति, तस्य शिवात्मकत्वात्। उक्तं च षाड्गुण्यविवेके —

एवं त्वन्मय एवाहमिति भावनया त्वयि ।
प्रलीनाहङ्कृतिग्रन्थिः पश्यत्येव त्वदात्मताम् ।। इति।

उक्तं च स्पन्दकारिकायाम् — "निजाशुद्ध्याऽसमर्थस्य कर्तव्येष्वभिलाषिणः। यदा क्षोभः प्रलीयेत तदा स्यात् परमं पदम्।।" स्वाभाविकाशुद्धाविद्यया असमर्थस्य सङ्कुचितशक्तेरित्यर्थः। "तदा स्यात् परमं पदम्" इत्यस्य स्वस्वरूपे स्थितिर्भवेदित्यर्थः। सर्वस्रष्टृत्वादिपञ्चकृत्यकारित्वस्वरूपाविर्भावोऽपि — "अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत्" इति स्पन्दकारिकोत्तरार्धेनोक्तः।

ननु तत्साम्यघटकतद्भेदस्य स्वरूपविकासदशायामपि सत्त्वे कथं मुक्तत्वम्, नैयायिकाङ्गीकृतनिर्दुःखत्वादिना सादृश्यस्यैव मुक्तित्वे कथं वाऽऽविर्भूतस्वरूपस्य शिवात्मकत्वम्? इति चेन्न, तत्सादृश्यं तदभिन्नत्वं वक्तव्यम्, "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्या तत्समत्वासम्भवस्य दर्शितत्वात्, "गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव।।" इत्यादाविव तत्समत्वं तदभिन्नत्वमेवेति बोध्यम्, "शिवस्वरूपो भवति शिवस्वरूपो भवति" इति श्रुतेः, श्रीमरितोण्टदार्येणापि "प्रसन्ने सति मुक्तोऽभून्मुक्तः शिवसमो भवेत्" इत्यत्र शिवसाम्यस्य शिवाभिन्नत्वात्मकत्वस्योक्तत्वात्। न च "मुक्तः शिवसमो भवेत्", "पुरुषस्तत्समो भवेत्" इत्युक्तवद्भ्यां सिद्धान्तशिखामणिस्पन्दप्रदीपिकाकाराभ्यां श्रीकण्ठाचार्याङ्गीकृततत्समानगुणसारकैवल्यलक्ष्मीरूपमोक्षस्येव शिवसमानगुणसारकैवल्यमभिप्रेतमिति वाच्यम्, "स्वप्रकाशं विराजन्तमनामयमनौपमम्" इत्यत्रानौपमपदेन निर्दिष्टशिवसादृश्यरहितत्वोक्तेर्विरोधः स्यात्, मुक्तजीवसादृश्यस्य सत्त्वात्। अतः शिवसमानगुणसारकैवल्यं श्रीसिद्धान्तशिखामणिकाराणामनभिप्रेतमिति ज्ञायते। एवं श्रीस्पन्दप्रदीपिकाकारश्रीकल्लटाचार्येणापि नाङ्गीकृतम्, अन्यथा "अतः सततमुद्युक्तः स्पन्दतत्त्वविविक्तये। जाग्रदेव निजं भावमचिरेणाधिगच्छति।।" इति स्वोक्तेर्विरोधः स्यात्। "स्पन्दतत्त्वविविक्तये" इत्यस्य "स्वरूपाभिव्यक्त्यर्थं निजमात्मीयं भावं स्वभावमचिरेण शीघ्रमधिगच्छति" इति व्याख्यातवतोत्पलाचार्येणाप्यनङ्गीकृतत्वान्न तत्समानगुणसारं कैवल्यम्, उक्तश्रुतिविरोधात्, अनेकेश्वरप्रसङ्गात्, मुक्तस्य ईश्वरत्वाभावे ईश्वरनियम्यत्वात्, बद्धाविशेषप्रसङ्गात्, ईश्वरत्वेऽनेकेश्वराणां भिन्नाभिप्रायकतया कार्योच्छेदप्रसङ्गाच्च।

ननु मुक्तदशायां शिवजीवयोर्भेदस्य "मम साधर्म्यमागताः" इत्यत्र साधर्म्यपदेन ज्ञायमानत्वाद् आगता इति "मुक्तानां परमा गतिः", "सायुज्यं प्रतिपन्नाय", "यस्मिन् पदे विराजन्ते मुक्ताः संसारबन्धनैः" इति च बहुवचनबलान्मुक्तात्मनां भेदस्य श्रुत्याद्युक्तस्य सत्त्वात् कथं शिवाभिन्नत्वं मुक्तस्य? इति चेदुच्यते — शिवव्यावर्तक-स्वशक्तिसङ्कोचप्रयुक्तहेतूनां देवतिर्यङ्मनुष्यादिभेदानां कामक्रोधादिभेदानां च निवृत्तौ मुक्तजीवानामभिन्नत्वात् तस्य शिवाभिन्नत्वान्न मोक्षदशायां भेदो वक्तुं शक्यते, तत्र बहुवचनस्य भूतपूर्वगत्या जीवगतानेकत्वार्थकत्वादविरोधात्। अन्यथा "ब्रह्म वेद ब्रह्मैव भवति", "यः सर्वज्ञः स सर्ववित्", "अहमन्नमहमन्नमहमन्नमहमन्नादोऽहमन्नादोऽहमन्नादः', "अहं ब्रह्मास्मि" इत्यादिश्रुतेर्विरोधः स्यात्।

ननु यथा परिपूर्णगुरुत्वादिभिः समानानां स्वर्णकलशरत्नव्रीहिप्रभृतीनां पदार्थानां भेदकस्य लक्षणस्याभावेऽपि व्यक्तीनां नानात्वं दृश्यते, तथा कथञ्चिदपि भेदप्रतिपत्तिहेतूनामभावेऽप्येकाकाराणां मुक्तात्मनां भेदः सिद्ध्यति, उक्ताभेदप्रतिपादक-श्रुतीनां च मुक्तात्मनां स्वरूपस्य शिवस्वरूपात्यन्तसमत्वादविरोध इति चेदुच्यते — छत्रचामरवाहनादिसहितस्य राज्ञः पादचारित्वादिवद् विश्वोत्तीर्णविश्वात्मकसर्वकर्तृत्व-सर्वज्ञत्वपरिपूर्णत्वनित्यत्वव्यापकत्वशक्तिः परशिव एव सङ्कुचितकला-विद्या-राग-काल-नियतिरूपशक्तिर्भवति। तथाविधश्चायं शक्तिदरिद्रः संसारीत्युच्यते। स्वशक्तिविकासे तु शिव एव।

ननु राज्ञः पादचारित्वदशायामहं राजा इतिवत् शिवस्य संसारित्वदशायां शिवोऽहमित्येव कुतो न प्रत्यभिज्ञायते? इति चेन्न, राज्ञोऽपि कदाचिन्नाहं राजेतिवत् "नाहं शिवः नाहं पूर्णः" इत्यादिप्रतीतेरुपपद्यमानत्वात्। तथा च शिव एव योगीव स्वशक्तिवैचित्र्येण नानाजीवरूपतया भासते। परिपक्वहृदयं शिष्यं यदाचार्यमूर्तिस्थः सन् अनुग्रहशक्त्या परतत्त्वे योजयति, तदा जीवः शिव एव, अन्यथा "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।।" इत्यादिश्रुतिविरोधापत्तेः। यथा नीरक्षीरसिन्धुसैन्धवयोजनानन्तरं व्यक्ति-गतद्वित्वमपि न दृश्यते, तथा मुक्तात्मशिवयोरिति वक्तव्यम्। अहिकुण्डलम्, स्वर्णकुण्डल-मित्यत्र अहेः स्वर्णस्य कुण्डलमिति विभागः कुण्डलाकारं परित्यज्य यदा स्वरूपमापद्यते, तदा तत्रैव विभागस्य लीनत्वान्न विभक्तप्रत्ययो भवति, तथा मुक्तदशायां विभागस्य शिव एव लीनत्वाज्जीवशिवयोरेकत्वमेवेति निश्चीयते। एतादृशलीनविभागाभिप्रायेणैव

मुक्तदशायां भेदो निवर्तत इत्युक्तम्। यथा च विभागातिरिक्तो भेदो न सिद्ध्यति तथा वक्ष्यते। तथा च आविर्भूतस्वरूपस्य शिवत्वात् शिवस्यैव दहराकाशशब्दवाच्यत्वम्, तस्यैवापहतपाप्मत्वादिकमुपास्यत्वं च सिद्ध्यति; न तु सङ्कुचितशक्तेर्जीवस्येति भाव ।।१९।।

ननु दहराकाशस्य शिवत्वे "अथ एष सम्प्रसादः" इत्याद्युक्तजीवपरामर्शस्य वैयर्थ्यं स्यात्? इत्याशङ्कायामाह —

## अन्यार्थश्च परामर्शः ।।२०।।

परामर्शः = जीवपरामर्शः, अन्यार्थः = ब्रह्मस्वरूपप्रतिपादनार्थः, न तु जीवस्वरूपविवक्षया तदुपास्यत्वविवक्षया वा, "अस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र यत्परं ज्योतिरुपसम्पद्य जीवेऽपहतपाप्मत्वादिस्वरूपं निष्पद्यते, तत्स्वरूपत्वाद् जीवस्य तद्ब्रह्मैवोपास्यमित्यर्थः।।२०।।

दहरायतनत्वस्य ब्रह्मणोऽनुपपन्नत्वाद् दहराकाशशब्दवाच्यत्वमुपास्यत्वं च कथमित्यत्राह —

## अल्पश्रुतेरिति चेत्तदुक्तम् ।।२१।।

ननु व्यापकस्य परशिवस्याल्पपरिमाणासम्भवात् "दहरोऽस्मिन्नन्तराकाशः" इत्याकाशस्याऽल्पत्वश्रुतेर्दहराकाशशब्दवाच्यत्वं जीवस्यैवेति चेन्न, तदुक्तम्— "अर्भकौकस्त्वात्" इत्यत्र सर्वव्यापकस्यापि शिवस्य भक्तोपासनार्थं व्योमदृष्टान्तेन प्रादेशिकत्वमुक्तमित्यर्थः ।।२१।।

सर्वगतस्य शिवलिङ्गस्यान्तर्धार्यत्वमुक्त्वा तस्य स्वप्रकाशत्वमाह —

## अनुकृतेस्तस्य च ।।२२।।

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।।" इत्यत्र सर्वप्रपञ्चप्रकाशकत्वेनावगम्यमानं वस्तु परशिव एव, न तेजोविशेषः, तस्य सूर्यचन्द्रादिप्रपञ्चस्य, अनुकृतेः=अनुकरणात्, "तमेव भान्तमनुभाति सर्वम्" इत्यनुभानादित्यर्थः, "तस्य भासा सर्वमिदं विभाति" इत्यत्र चन्द्रसूर्यादेः स्वेनैव प्रकाशासम्भवस्य 'र्शितत्वाच्च तस्येति तत्पदेन

परशिवस्योच्यमानत्वात्। अत्र "तमेव भान्तमनुभाति सर्वम्" इत्यनेन चित्प्रकाशान्तर्गततत्वेनैव सर्वेषां प्रकाशः, न तदनन्तर्गततत्वेन केषाञ्चित्प्रकाश इति परशिवस्य विश्वात्मकत्वम्। "तस्य भासा सर्वमिदं विभाति" इत्यनेन विश्वोत्तीर्णत्वमप्युक्तमिति बोध्यम् ।।२२।।

हेत्वन्तरमाह —

## अपि च स्मर्यते ।।२३।।

कृष्णगीतासु स्मर्यत इत्यर्थः। तथाहि — "न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम।।", "यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।।" इति श्लोकद्वयेन स्वस्याभास्यत्वसर्वभासकत्वयोर्निर्दिष्टत्वात् स्वयंप्रकाशत्वरूपविश्वोत्तीर्णत्व-सर्वावभासकत्वरूपविश्वात्मकत्वयोः सिद्धत्वाद् भास्यभासकयोरभेदाद् घट इति ज्ञानं मठ इति ज्ञानमित्यभेदप्रतीतेः। उक्तं च स्पन्दकारिकायाम् — "यस्मात् सर्वमयो जीवः सर्वभावसमुद्भवः। तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः।। तेन शब्दार्थचिन्तासु न सावस्था न या शिवः।। भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः।।" इति। जीवस्य बोद्धृरूपत्वात् तस्य बोधरूपत्वात् तस्य बोध्यरूपत्वाद् जीवात्मा सर्वमयः, विश्वरूप इत्यर्थः। उक्तं च — "यदैव विदितं विश्वं तदानीमेव चिन्मयम्। यत्रास्ति भोगो वेद्योऽसौ नाथ यो वेदकाद्बहिः।। वेद्यो वेदकतामाप्तो वेदकः संविदात्मताम्। संवित्त्वदात्मा चेत् सत्यं तदिदं त्वन्मयं जगत्।।" इति, "आत्मैवेदं जगत्सर्वं नेह नानास्ति किञ्चन" इति श्रुतेश्च। अन्यच्चोक्तम् — "त्वदात्मकत्वं भावानां विवदन्ते न केचन। यत्प्रकाश्यदशां याता नाप्रकाशः प्रकाशते।।" इति, तथा — "न प्रकाशाः प्रकाशन्ते त्वत्प्रकाशोदयं विना" इति। उक्तं च स्वात्मसप्ततौ — "यद्यद्वस्तु स्वभावेन ज्ञानेन विषयीकृतम्। तद्वत्तादात्म्यमायाति जीवः सर्वमयो ह्यतः।।" इति। अन्यच्च संवित्प्रकरणे — "यथाग्निना समाविष्टं सर्वं तद्रूपमिष्यते। तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम्।।" इति। तथा च चित्तसङ्कोचचितिविशिष्टजीववेद्यस्य जीवरूपत्ववत् शिवप्रकाशेन प्रकाश्यमानानां सर्वेषां शिवात्मकत्वमिति भावः।।२३।।

एतादृशविश्वात्मकविश्वोत्तीर्णपरशिवस्य श्रुत्युक्ताङ्गुष्ठमात्रत्वादिकमप्युपपद्यत इत्याह —

## शब्दादेव प्रमितः ।।२४।।

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते।।" इति, "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः।। एतद्वै तत्" इत्यत्राङ्गुष्ठमात्रः पुरुषः परशिव एव।

ननु सङ्कुचितशक्तिकजीवस्य "नाहं पूर्णः" इत्याणवमलोपपन्नत्वात्, "चित्तमात्मा" इति शिवसूत्रेणापि तस्याणुत्वस्य ज्ञायमानत्वात्, "स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः। अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः।।" इति श्रुत्यन्तरेणापि तस्यैवाङ्गुष्ठमात्रत्वसिद्धेः, "मध्य आत्मनि तिष्ठति" इत्यनेन देहान्तर्वर्तित्वावगमाच्चाङ्गुष्ठमात्रः पुरुषो जीव एवेति चेन्न, शब्दादेव = ईशानशब्दादेव, साक्षात् शिवः प्रमितः, निश्चित इत्यर्थः। "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" इत्यादिश्रुत्यन्तरे तस्यैवेशानशब्दवाच्यत्वात्, "ईशानो भूतभव्यस्य" इत्यादिश्रुत्युक्त-भूतभव्येश्वरत्वस्य, "ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यनीशस्य जीवस्यानुपपन्नत्वात्, "सर्वो वै रुद्रः" इत्यादौ तस्यैव चराचरात्मकत्वश्रवणात्, "नमस्ते भगवन् विश्वेश्वराय" इत्युपक्रम्य "सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय" इत्यन्तेन तस्यैव विश्वोत्तीर्णत्व-श्रवणाच्च। "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्।।" इत्यादिपरशिवस्यैवाङ्गुष्ठमात्रत्वनिर्देशान्न जीव इत्यर्थः।।२४।।

ननु विश्वातीतविश्वात्मकशिवस्य परब्रह्मणोऽङ्गुष्ठमात्रत्वमनुपपन्नमित्याशङ्काया-माह —

## हृद्यपेक्षया तु मनुष्याधिकारत्वात्।।२५।।

अत्र तुशब्दः पूर्वपक्षनिरासार्थः। हृद्यपेक्षया विश्वोत्तीर्णविश्वात्मकापरिच्छिन्नस्यापि परशिवस्य हृदयापेक्षया परिच्छिन्नत्वं सम्भवति, ज्योतिर्लिङ्गोपासनाशास्त्रस्य मनुष्याधिकारत्वात् = मनुष्यमात्राधिकारत्वात्। एतेन मनुष्यमात्रस्यैव ब्रह्मविद्याधिकारित्वं सूचितम्। भक्तानुग्राहकः परशिवो मनुष्यहृदयपरिमितस्वरूपं परिगृह्य तदुपासनासिद्धये ज्योतिर्मयप्राणलिङ्गरूपतयोपासकहृत्पद्मे तिष्ठतीत्यर्थः।।२५।।

नन्वेवमन्तर्लिङ्गधारणस्य मनुष्यत्वावच्छिन्नमात्रनिष्ठत्वेऽथर्वशिरसि — "ते देवा रुद्रं ध्यायन्ति" इति श्रूयमाणं रुद्रकर्मकध्यानं ज्योतिर्लिङ्गानुसन्धानम्, अन्तर्लिङ्गधारणमिति यावत्। उक्तं चाचार्येण — "ज्योतिर्लिङ्गानुसन्धानमान्तरं लिङ्गधारणम्" इति, लिङ्गधारणचन्द्रिकाकारेणापि — "मुखे मन्त्रो हृदि ध्यानं मस्तके लिङ्गधारणम्" इत्यत्र हृदि ध्यानमित्यस्यान्तर्लिङ्गधारणार्थकत्वमुक्तमनुपपन्नमित्याशङ्काशान्तये देवताधि-करणमारभते —

## तदुपर्यपि बादरायणः सम्भवात् ।। २६ ।।

तदुपर्यपि मनुष्याणामुपर्यपि देवादीनामाभ्यन्तरब्रह्मलिङ्गधारणं सम्भवतीति बादरायणाचार्यो मन्यते। कुतः? सम्भवात्= तेषामप्यपवर्गस्येच्छायाः सम्भवात् । उक्तं च श्रीमन्नीलकण्ठशिवाचार्यचरणैः —

यथा मनुष्यैर्धर्तव्यं लिङ्गं देवैस्तथैव हि ।
अधिकारं देवतानां मनुते बादरायणः ।।
तदुपर्यपि देवानां विष्ण्वादीनां च सम्भवात् ।
तेषां विग्रहवत्त्वाच्च ह्यधिकारोऽत्र निश्चितः ।। इति।

विग्रहवत्त्वं च तेषाम् — "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादिना तैत्तिरीयादौ श्रूयते। उक्तं च रेणुकागस्त्यसंवादेऽपि —

"ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः। धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः।। लक्ष्म्यादिशक्तयः सर्वाः शिवभक्तिविभाविताः। धारयन्त्यलिकाग्रेषु शिवलिङ्गमहर्निशम्।।" इति। तत्रैव — "ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्याश्च लोकपाः। मुनयः सिद्धगन्धर्वा दानवा मानवास्तथा।। सर्वे च ज्ञानयोगेन सर्वकारणकारणम्। पश्यन्ति हृदये लिङ्गं परमानन्दलक्षणम्।।" इत्यादिना बाह्याभ्यन्तरधारणमप्युक्तम्। 'लक्ष्म्यादि' इत्यनया रेणुकभगवत्पादाचार्योक्त्या स्त्रीणां लिङ्गधारणं विधीयते।।२६।।

ननु देवानां विग्रहादिमत्त्वे कर्मणि विरोधः स्यात्? इत्याशङ्क्य निराकरोति —

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ।। २७ ।।

एकस्य देवशरीरस्यानेकत्र युगपत्सन्निधानासम्भवात् कर्मणि विरोधः स्यादिति चेन्न, अनेकप्रतिपत्तेः, योगिनामिव देवतानामप्यनेकशरीरधारणस्य दर्शनात्। "कति देवाः", इत्युपक्रम्य "त्रयश्च त्री च शताः त्रयश्च त्री च सहस्राः" इत्युक्त्वा "कतमे ते?" इति पृच्छायां "महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः" इत्यादिषु कथनादित्यर्थः। तस्माद् एकस्मिन् दिने एव क्रियमाणेष्वनेकेषु यागेष्वेकस्यैव देवस्यानेकशरीर-परिग्रहसम्भवात् तत्र सान्निध्यान्न विरोध इति भावः।।२७।।

वैदिकशब्दे विरोधमाशङ्क्य परिहरति —

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ।। २८ ।।

शब्दे वैदिकेन्द्रादिशब्दे विरोध इति चेन्न, अतः प्रभवात् = अतो वैदिकादेवेन्द्रादिशब्दादिन्द्रादीनामुत्पत्तेः। इन्द्रादिशब्दानामाकृतिवाचकत्वात्, व्यक्तिपरत्वाभावात्, इन्द्रादिव्यक्तिनाशेऽपि तेषामनित्यत्वादिकं न स्यात्। तथा चेन्द्रादिव्यक्तिविनाशेऽपि तत्तदाकृतेरविनाशेनेन्द्रादिवैदिकशब्दानां नित्यत्वादविरोधः। तत्र वेदस्येन्द्राद्यर्थजनकत्वं च प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां सिद्धं भवति। तथा हि "वेदेन रूपे व्यकरोत् सता सति प्रजापतिः। स भूरिति व्याहरत्। स भूमिमसृजत्" इत्यादिश्रुतिः, "सर्वेषां च स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे।।" इति च स्मृतिः। अत एव च नित्यत्वम्। अत एव वेदस्य देवादिप्रपञ्चं प्रति कारणत्वादेव नित्यत्वम्, अविरुद्धमित्यर्थः। वेदानां परमेश्वरविमर्शशक्तिस्वरूपत्वात्, नित्यत्वात्, तन्मिथ्यात्वे वेदबाह्यपाषण्डमतप्रवेशप्रसक्तेश्च, "वाचो विरूपनित्यया" इत्यादिश्रुतिविरोधाच्च नानित्यत्वमित्यर्थः।।२८।।

इन्द्रादिदेवानां प्रतिकल्पं विलक्षणनामरूपवत्त्वाद्वेदस्य कथं तत्प्रतिपादकत्वम्? इत्याशङ्क्याह —

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ।।२९।।**

समाननामरूपत्वात् = सर्वेषामिन्द्राणां सर्वेषु कल्पेषु समाननामरूपत्वात्, आवृत्तावपि इन्द्रपरम्पराया अङ्गीकृतत्वेऽपि, अविरोधो वेदस्य इन्द्रप्रतिपादकत्वविरोधो नास्ति। कुतः? दर्शनात्। श्रुतेः स्मृतेश्च इत्यर्थः। तदुक्तं — "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः।।", "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं हि देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये।।" इत्यादिश्रुतिः । स्मृतिरपि— "अप एव ससर्जादौ तासु वीर्यमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। ब्रह्माणं विदधे पूर्वं वेदानस्मै प्रयच्छति।।" इति। उक्तं च सिद्धान्तशिखामणौ — "जगत् सिसृक्षुः प्रथमं ब्रह्माणं सर्वदेहिनाम्। कर्तारं सर्वलोकानां विदधे विश्वनायकः।। तस्मै प्रथमपुत्राय शङ्करः शक्तिमान् विभुः। सर्वज्ञः सकला विद्याः सानुग्रहमुपादिशत्।।" इति।।२९।।

मतान्तरमाह —

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः ।।३०।।**

"असौ वा आदित्यो देवमधु" इत्यादिश्रुतौ आदित्यमण्डलप्राप्तिफलकेषु मधुविद्यादिष्वादित्यादीनामधिकारासम्भवात् स्वस्यैवोपास्यत्वोपासकत्वाभावाद् विद्यात्वाविशेषाद् ब्रह्मविद्यायामप्यनधिकारं जैमिनिराचार्यो मन्यते ।।३०।।

तत्र हेत्वन्तरमाह —

## ज्योतिषि भावाच्च ।।३१।।

नक्षत्रमण्डलेष्विव लोके आदित्येन्द्रादिशब्दानां ज्योतिर्मण्डलेऽचेतने प्रयुज्यमानत्वाद् विग्रहवद्देवतायामप्रयोगान्नाधिकार इति भावः।।३१।।

तन्मतं निराकरोति —

## भावं तु बादरायणोऽस्ति हि ।।३२।।

तुशब्दः पूर्वपक्षनिराकरणार्थः। बादरायण आचार्यो मधुविद्यादिषु देवानामधिकाराभावेऽपि ब्रह्मविद्यायामधिकारं मन्यते। यद्यपि ज्योतिर्मण्डलादेरचेतनत्वान्नाधिकारः, तथाप्यस्ति हि तद्व्यतिरिक्ता मण्डलाभिमानिनी विग्रहवती चेतना देवता, पुराणेषु प्रतिपाद्यत इत्यर्थः।।३२।।

"अहहारे त्वा शूद्र तवैव गोभिरस्तु" इति श्रुतौ शूद्रशब्दप्रयोगात् संस्काराभावप्रयुक्तशूद्रत्वाश्रयाणामपि ब्रह्मविद्यायामधिकारोऽस्तीति शङ्कां परिहरति —

## शुगस्य तदनादरश्रवणात्तदा द्रवणात् सूच्यते हि ।।३३।।

अस्य जानश्रुतेः, तदनादरश्रवणाद् हंसोक्तानादरवाक्यश्रवणात्, शुगुत्पन्ना, तदा द्रवणात् तया आचार्यं प्रत्याद्रवणाद् आगमनात् सूच्यते शूद्रशब्देन प्रतिपाद्यते इत्यर्थः। हिशब्दो हेत्वर्थकः। यतः शूद्रशब्दो न रूढः, किन्तु यौगिकः। ततोऽदीक्षितस्य शूद्रस्यान्तर्लिङ्गानुसन्धानरूपं ब्रह्मोपासनं मोक्षाप्रयोजकमित्यर्थः। अत्रैवाधिकरणे स्फुटीभविष्यत्येतत् ।।३३।।

ननु योगाद्रूढेर्बलीयस्त्वाद् रूढोऽर्थः कस्मान्नाद्रियते? तत्राह —

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ।।३४।।

उत्तरवाक्ये — "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणा ब्रह्मचारिभिर्भिक्षा" इत्यत्राभिप्रतारी चैत्ररथः क्षत्रिय इत्यवगम्यते, कापेयाख्ययाजकयोगस्य "एतेन चैत्ररथं कापेया अयाजयन्" इत्यादिना श्रूयमाणत्वात् चैत्ररथक्षत्रियेण सह

पाठाल्लिङ्गात् क्षत्रियत्वगतेः क्षत्रियत्वनिश्चयादित्यर्थः। अतोऽत्र क्षत्रिय एव शूद्रशब्दो वर्तते। तस्मान्नादीक्षितस्य शूद्रस्य ब्रह्मविद्यायामधिकारः।।३४।।

ननु शूद्रस्य तत्त्वमस्यादिमहावाक्यविचारजन्यब्रह्मविद्यायामनधिकारे तस्य मोक्षः कथं स्यादित्यत्राह —

**संस्कारपरामर्शात् तदभावाभिलापाच्च ।।३५।।**

"पवित्रं ते विततं ब्रह्मणस्पते", "सर्वलिङ्गं स्थापयति", "लिङ्गव्रतं चरेत्", "भृगुर्वै वारुणिर्वरुणं पितरमुपससार — अधीहि भगवो ब्रह्मेति", "तं होपनिन्ये", "चतुर्वर्णानां धारणं कुर्यात्", "सर्ववर्णेषु धारणम्", "अयं मे हस्तो भगवान्", "या ते रुद्र शिवा तनूरघोराऽपापकाशिनी", "त्र्यम्बकं यजामहे", "शिरसि महादेवस्तिष्ठत्विति धारयेत्" इत्यादिषु शिवदीक्षासंस्कारस्य परामर्शात्। संस्कारो नाम शिवदीक्षेति वायवीये कृष्णोपमन्युसंवादपरिशीलनेन ज्ञायते। तथा हि — "इदानीं श्रोतुमिच्छामि शिवसंस्कारमुत्तमम्" इति प्रश्ने उपमन्युः — "हन्त ते कथयिष्यामि सर्वपापविशोधनम्। संस्कारं परमं पुण्यं शिवेन परिभाषितम्।। सम्यक् कृताधिकारः स्यात्पूजादिषु नरो यतः। संस्कारः कथ्यते तेन षडध्वपरिशोधनम्।। दीयते येन वै ज्ञानं क्षीयते पाशबन्धनम्। तस्मात्संस्कार एवायं दीक्षेत्यपि च कथ्यते।।" इत्यादिभिः क्रियासारकारादृतश्लोकैः शिवदीक्षाया संस्कारत्वदर्शनात्। एतादृशसंस्कारस्य को वाधिकारीत्यपेक्षायाम् — "शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति। शिवधर्माधिकारस्य तन्मूलत्वात् समासतः।।" इत्यादिबहुवाक्यैर्यत्र शक्तिपातस्तस्याधिकारित्वमुक्तम्। अनधिकारित्वं च —

यत्र शक्तिर्न पतिता तत्र शुद्धिर्न जायते ।
न विद्या न शिवाचारो न मुक्तिर्न च सिद्धयः ।।
तस्माल्लिङ्गानि संवीक्ष्य शक्तिपातस्य भूरिशः ।
ज्ञानेन क्रियया वाथ गुरुः शिष्यं विशोधयेत् ।।

इत्यादिनोक्तम्। एतद्वैपरीत्येऽपि — "योऽन्यथा कुरुते मोहात् स विनश्यति दुर्मतिः। तस्मात् सर्वप्रयत्नेन गुरुः शिष्यान् परीक्षयेत्।।" इत्यादिना निन्दा चोक्ता। शक्तिपातचिह्नानि तु — "लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः। सा यस्मात्परमा शक्तिः प्रबोधानन्दरूपिणी।। आनन्दबोधयोर्लिङ्गमन्तःकरणविक्रिया। यथा स्यात् कम्परोमाञ्चस्वरनेत्राङ्गविक्रियाः।।" इत्यादिभिरुक्तानि बोद्धव्यानि।

उक्तं च सिद्धान्तशिखामणौ — "शक्तिपातं समालोक्य दीक्षया योजयेद्गुरुः" इति। किञ्च — "किमत्र बहुनोक्तेन भक्ताः सर्वेऽधिकारिणः। मम पञ्चाक्षरे मन्त्रे तस्मात्

श्रेष्ठस्ततो हि सः।।'' इत्यनेन मनुदीक्षाधिकारित्वमपि भक्तमात्रे इति कथनात्। किञ्च — ''भगवन् मोक्षमार्गोऽयं त्वया सम्यगुदाहृतः। तत्राधिकारिणं ब्रूहि तत्र मे संशयो महान्।।'' इति रामप्रश्ने — ''ब्रह्मक्षत्रियविट्शूद्राः स्त्रियश्चात्राधिकारिणः'' इति परमशिवेनैव सर्वेषां मोक्षमार्गाधिकारित्वस्योक्तत्वात्। किञ्च, तेनैव — ''बहुनात्र किमुक्तेन यस्य भक्तिः शिवार्चने। स एवात्राधिकारी स्यान्नान्यचित्तः कथञ्चन।।'' इत्युक्तत्वाच्च मोक्षमार्गभूतब्रह्मविद्यायां मनुष्यमात्राधिकारित्वं ज्ञायते।

किञ्च, वीरशैवधर्मशिरोमणिकारैरपि — ''यश्च मत्करुणापात्रं चरमं जन्म यस्य वै। तस्यैव जायते भक्तिर्मम लिङ्गस्य धारणे।।'' इत्यागमश्लोकमुक्त्वा लिङ्गधारणे शिष्यस्य भक्त्युद्रेकमालोक्य ''हस्तमस्तकसंयोगमाचरेच्च शिवं स्मरन्। अतस्तिष्ठ शिवाज्ञेतीत्यङ्गीकुर्याद् गुरुस्ततः।।'' इत्यादिना शिवसंस्कारस्य भक्तमात्राधिकारित्वमुक्तम्। किञ्च, ''भक्तिमात्रपवित्रा हि सर्व एवाधिकारिणः'' इत्यन्यत्रोक्तत्वाच्च। ''परिपक्वमलान् शम्भुः सकलानां च मध्यतः। कृपया परया वीक्ष्य दीक्षयेद्देशिकोत्तमः।। गुरुश्च स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत्।। ब्राह्मणं क्षत्रियं वैश्यं द्विवर्षं त्रिवर्षं तथा।। प्राणद्रव्यप्रदानाद्यैरादेशैश्च समागमैः। आकृष्टास्ताडिता वापि ये विषादं न यान्त्यपि। ते योग्या संयताः शुद्धाः शिवसंस्कारकर्मणि।। अहिंसका दयावन्तो नित्यमुद्युक्तचेतसः। अमानिनो बुद्धिमन्तस्त्यक्तस्पर्धाः प्रियंवदाः।। ऋजवो मृदवः स्वस्था विनीताः स्थिरचेतसः। शैवाचारसमोपेताः शिवभक्ता द्विजातयः।। किमत्र बहुनोक्तेन योऽपि सोऽपि शिवाश्रितः।। संस्कार्यो गुर्वधीनश्चेत् संस्कारात् प्रतिभिद्यते।।'' इत्युक्तत्वाच्च शिवसंस्कारार्हत्वं सर्वेषामिति सिद्धम्।

न च स्त्रीशूद्रादीनां शिवसंस्कारार्हत्वेऽपि ''स्त्रीशूद्रौ नाधीयाताम्'' इत्यादिना वेदाध्ययनस्यैव निषिद्धत्वे वेदार्थविचारानर्हत्वात् कथं ब्रह्मविद्यायामधिकार इति वाच्यम्, तदभावाभिलापाच्च। तेषां शूद्रत्वादीनां धर्माणामभावस्याभिलापात्, कथनादित्यर्थः। अभिलप्यते च लिङ्गोपनिषदि — ''कैलासस्वरूपं धारणं देहं वेदस्वरूपं धारणं देहं ब्रह्मस्वरूपं धारणं देहम्'' इत्यादिना शिवसंस्कारसंस्कृतानां शूद्रत्वाद्यभावः। अपि च, वृद्धजाबालोपनिषदि — ''शिवस्वरूपो भवति। शिवस्वरूपो भवति'' इत्यादिना, तथा — ''ब्राह्मणा क्षत्रिया वैश्याः शूद्रा ये चान्त्यजातयः। लिङ्गधारणमात्रेण शिवा एव न संशयः।।''

किञ्च, श्रीलिङ्गधारणमहाविभवेन सर्वे रुद्रा बभूवुरत एव न तारतम्यम्। एतन्मते — ''सजननीकसुता इव स्युर्वीराः परस्परसहोदरभावभाजः'' इत्यभियुक्तोक्तेश्च।

''यथा हि रजतं ताम्रं रसयोगात् सुवर्णताम्। तथा शिवज्ञानरसात् शूद्रादिः शिवतां व्रजेत्।।'', ''यस्यैवं शाम्भवी भक्तिर्भवेद् गुरुकृपावशात्। पूर्वजात्यादिकं तस्य न स्मरेत्प्राकृतं हि तत्।। अप्राकृतस्य भक्तस्य गुरुहस्तकृपाम्बुजात्। पुनर्जातस्यात्मजन्मजात्यादि न च कल्पयेत्।। पाषाणादिकृतं लिङ्गं यद्वत् पूज्यं प्रतिष्ठितम्। नीचवंशोद्भवश्चापि भक्तश्चेदीश्वरे तथा।।'' इत्यादिना शूद्रत्वाद्यभावः कथ्यते।

किञ्च, ''भक्तस्य प्राक्तनं जन्म नामजात्यादिकं च यत्। पृच्छेद्वा कथयेद्वापि स वै पातकिनां वरः।।'' इत्यादिना संस्कृतस्य शूद्रत्वारोपणे निन्दापि निगद्यते। किञ्च ''न तत्र जातिभेदोऽस्ति न शुच्यशुचिकल्पना'' इत्यादिना जातिभेदो निषिध्यते। किञ्च, ''स्त्रियो बालास्तथा वृद्धा खञ्जाः कुब्जाश्च पङ्गवः। उन्मत्ता बधिराः कुष्ठाः शठा धूर्ताश्च वञ्चकाः।। चोरा जारास्तथा वेश्या आचण्डालान्तसम्भवाः। मल्लिङ्गधारणादेव मद्रूपा एव ते शिवे।।'' इत्यादिना चाण्डालादीनामपि संस्कृतत्वे शूद्रत्वाभावोऽभिलप्यते। ''अन्त्यजो वापि मूर्खो वा पतितो ब्राह्मणोऽपि वा। शिवभावं प्रपन्नश्चेत् पूज्यः सर्वसुरासुरैः।।'' इति क्रियासारकारिकयापि तत्कथनात् शिवदीक्षासंस्कारेण शिवभावापन्नस्य शूद्रत्वाद्यभावोऽभिलप्यते। अत एव — ''संस्काराद् द्विज उच्यते। वेदाध्यायी तु विप्रः स्याद् ब्रह्म जानाति ब्राह्मणः।।'' इति वज्रसूच्युक्तिरपि सङ्गच्छते। अयमत्राशयः — साक्षान्मोक्षसाधनविभूति-रुद्राक्ष-लिङ्गधारणबोधकश्रुतिभिस्तद्धारकाणां सर्वेषां शिवत्वे प्रतिपादिते सर्वासां महानदीनां ऋजुकुटिलानां समुद्रं प्राप्तानामियमियं नदीति भेदाप्रतीतिवद् ब्राह्मणादिशूद्राणां शिवसंस्कारसंस्कृतानां वीरशैवमतप्रविष्टानां वर्णभेदस्याप्रतीयमानत्वम्, किन्तु सर्वासां नदीनां समुद्रत्ववत् शिवत्वमेवेति निर्णीयते। न च संस्कारकालावच्छेदेन शूद्रत्वाद्यभावेऽपि तदूर्ध्वं तत्सम्भव इति वाच्यम्, शिवदीक्षासंस्कारस्य यावज्जीवं सत्त्वात्। अत एव दीक्षाया एव मोक्षसाक्षात्कारणत्वेऽपि न ब्रह्मजिज्ञासाया वैयर्थ्यम्। तस्या यावज्जीवभावित्वं तु —

आदेहान्तमियं दीक्षा पशुपाशविनाशिनी ।
यावज्जीवमिदं दत्तमिष्टलिङ्गं समर्चयन् ।।

इत्यादिनाऽवगम्यते। किञ्च, ''दीक्षया मुच्यते देही विविधाद् भवबन्धनात्। शिवत्वं याति स तदा न पुनः पशुतां व्रजेत्।। रसविद्धं यथा ताम्रं ताम्रभावाद्विमुच्यते। सुवर्णेन सहैकत्वं गतं तद्याति हेमताम्।। नवनीतं यथा तप्तं तत्स्वभावं परित्यजेत्। घृतस्वभावमापन्ने न पुनर्नवनीतता।। यथा शुक्तिगतं तोयं मौक्तिकत्वं न मुञ्चति। एवं स शिवतां प्राप्तो न पुनः पशुतां व्रजेत्।। शिवत्वान्न च हीयेत विमुक्तो दीक्षया भवेत्।।'' इत्यादिना संस्कृतस्य

पशुत्वादिनिषेधे शूद्रत्वाद्यभावस्य कैमुतिकन्यायसिद्धत्वं बोध्यम्। चकारेण जीवत्व-प्रेतत्वाभावावपि ज्ञायेते।

ननु शूद्रत्वाद्यभावापादकशिवसंस्कारसंस्कृतानामग्निदग्धानां सर्वेषां वस्तूनामिव पवित्रत्वे सिद्धे तैः साकं भोजनवासादिकं स्यादिति चेदस्तु लिङ्गाङ्गसामरस्यापन्नैर्दीक्षितैः शिवज्ञानिभिः शिवारूढैः सिद्धैः साकम्, "सिद्धिभिर्लक्षयेत् सिद्धिं जीवन्मुक्तिं तथैव च" इत्युक्तेः। लिङ्गाङ्गसामरस्यविधुराणामदीक्षितानां लिङ्गधारणमात्रशालिनां शूद्रादीनां स्वैरिणां परिशुद्धत्वाभावात् तैः साकं ये सम्प्रदायशुद्धवीरशैवमतानुगा ब्राह्मणादयः "न तत्र जातिभेदोऽस्ति" इति पारमेश्वरागमप्रामाण्यात्, "जातिविषयान् परित्यजेत्" इति श्रुतिप्रामाण्यात्, "अपि वा यश्चण्डालः शिवेति वाचं वदेत् तेन सह भुञ्जीत, तेन सह संवसेत्" इत्यस्य श्रीमरितोण्टदार्यादृतस्य श्रुतिवाक्यस्य प्रामाण्याच्चाभेदबुद्ध्या भोजनादिसम्बन्धं कुर्वन्ति, ते — "शिवोक्तां जातिमर्यादां योऽतीत्य भुवि वर्तते। स चण्डाल इति ज्ञेयः सर्वकर्मबहिष्कृतः।।" इति वाक्यावगतप्रत्यवायबद्धा देहान्ते नरकयातनामनुभवन्तीति दिक्।

नह्युत्तमकुलजानामेव तत्त्ववेत्तृत्वमिति नियमो दृश्यते, बहुषु ब्राह्मणेषु यस्य कस्यचिदेव तत्त्ववेत्तृत्वदर्शनात्। तिर्यग्गर्भसम्भवा अपि महान्तो दृश्यन्ते। तथा च ब्रह्मोत्तरखण्डे — "किं भाव्यं किमभाव्यं वा संसारेऽस्मिन् भ्रमात्मके। ईश्वरस्य तु या माया तस्या को वेत्ति चेष्टितम्।। हरिणी गर्भिणी भूत्वा ऋष्यशृङ्गमसूयत। सुराष्ट्रस्य तथा राज्ञः करं स्पृष्ट्वा सुराङ्गना। तत्क्षणाद् गर्भिणी भूत्वा मनुं प्रासूत तापसम्।। तथा सत्यवती कन्या शफरीगर्भसम्भवा। तस्यां व्यासः समुत्पन्नः सर्वविज्ञानसागरः।।" इति। वज्रसूच्यां च — "ऋष्यशृङ्गो मृग्याम्, कौशिकः कुशास्तीर्णे, गौतमः शशपृष्ठे, जम्बुको जाम्बुक्याम्, वशिष्ठ ऊर्वश्याम्, वाल्मीकिर्वल्मीक्याम्, व्यासः कैवर्तककन्यायाम्, अगस्त्यः कलशोद्भवः, विश्वामित्रः क्षत्रियः, नारदो दासीपुत्रः" इत्येवमादिदर्शनान्नहि जन्मस्थानमात्रेण तत्त्वज्ञानिनो भवन्ति, किन्तु शिवदीक्षाग्नितप्तानां शिवज्ञानित्वं स्पष्टम्।

ननु शूद्रत्वादीनां जातीनां नित्यत्वात् कथं संस्कारस्य तद्ध्वंसरूपाभाव-कारणत्वमिति चेन्न, प्रलये सर्वेषां शूद्रादिव्यक्तीनां नाशे आधारं विना आधेयस्या-सत्त्वप्रसङ्गात्, द्रव्यत्वव्याप्यव्याप्यजातेः परमाण्ववृत्तित्वनियमाच्च। नहि घटत्वादिकमाधेयं घटाद्याधारं विना तिष्ठति। तस्मात् शूद्रत्वादीनामनित्यत्वात् तद्ध्वंसो युज्यते। उक्तं च क्रियासारे — "वेदाचारयुतो विद्वान् ब्राह्मणो नाम नामतः। वेदाचारयुतो विप्रो ह्येतेष्वैकत्ववान् द्विजः।। अल्पाचारोऽल्पवेदश्च क्षत्रियो राजसेवकः। किञ्चिदाचारवान्

वैश्यः कृषिवाणिज्यतस्तथा।। शूद्रब्राह्मण इत्युक्तः स्वयमेव हि कर्षकः। असूयालुः परद्रोही चण्डालद्विज उच्यते।। पृथिवीपालको राजा इतरे क्षत्रियास्तथा। धान्यादिक्रयवान् वैश्य इतरो विश उच्यते।। ब्रह्मक्षत्रियवैश्यानां शुश्रूषुः शूद्र उच्यते। कर्षको वृषलो ज्ञेय इतरे चैव दस्यवः।। इत्यादिषु पुराणानां वचनेषु गुणैः पुनः। सम्बन्धाद् ब्राह्मणादीनि नामानि न च जातितः। वैदिकत्वाद्वीरशैवा आचाराद्वैदिकोत्तमाः।।'' इति। तस्मात् शूद्रत्वादीनामागन्तुकत्वात् संस्कारवशात् तन्निवृत्तिरुपपद्यते।

नन्वस्तु शूद्रादीनां संस्कारार्हत्वे तद्वशात् तन्निवृत्तिः, ''न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति'', ''शूद्रश्चतुर्थो वर्ण एकजातिः'' इत्यादिस्मृतिषु तेषां संस्कारानर्हत्वमेव ज्ञायते। तस्मादसंस्कृतानां शूद्रादीनां कथं ब्रह्मोपासनेऽधिकार इति चेत्, उक्तश्रुत्यागमैः स्वतः प्रमाणभूतैः शूद्रादीनां संस्कारार्हत्वे सिद्धे तद्विरुद्धस्मृतिवाक्यानामप्रामाण्यात्। शैवागमानां तु स्वतः प्रामाण्यम् — ''आगमानां तु सर्वेषां स्वतः प्रामाण्यमुच्यते'' इत्यादिना क्रियासारे साधितं तत एवावगन्तव्यम्।

किञ्च, नहि शूद्रादीनां संस्कारानर्हत्वं कुत्रापि प्रत्यक्षश्रुतिषु दृश्यते। अत एव शूद्रादिसंस्कारानर्हत्ववादिभिस्तेषां संस्काराभावे स्मृतिरेव प्रमाणत्वेनोपन्यस्यते। नैतद्रोचते मनुष्यमात्रहितचिन्तकेभ्यो निष्पक्षपातबुद्धिभ्यः। ''हृद्यपेक्षया तु मनुष्याधिकारत्वात्'' इति सूत्रेण मनुष्यमात्रस्य ब्रह्मविद्यायामधिकारस्य सूत्रकाराभिप्रेतत्वेऽपि केषाञ्चिदधिकारः केषाञ्चिन्नेति कथनं रागद्वेषप्रयुक्तमिति वक्तुं शक्यते।

ननु तदभावाभिलापाच्चेत्यत्र तत्पदेन संस्कारस्यैव ग्रहीतुं शक्यत्वात्, तस्यैव पूर्वोक्तत्वात्, तत्पदस्य पूर्वोक्तपरामर्शकत्वात् कथं पूर्वानुक्तशूद्रत्वादिकं गृह्यते? इति चेन्न, तत्पदं कण्ठतः पूर्वोक्तमेव परामृशतीति सर्वत्र नियमाभावात्, अस्मिन्नधिकरणे शूद्रत्वस्यापि प्रसङ्गात्, पूर्वोक्तत्वस्य ज्ञायमानत्वात्। अन्यथा तदभावनिर्धारणे च प्रवृत्तेरिति सूत्रघटक-तत्पदेनापि शूद्रत्वं न गृह्येत, शूद्रत्वस्य पूर्वानुक्तत्वात्। तस्मात् — ''आगमेषु पदार्था ये त एव व्याससूत्रके'' इत्यादिवचनानुरोधेन श्रुत्यागमानुकूल्येनैव व्याससूत्रतात्पर्यं वर्णनीयमित्यस्माकमाशयः। अत एवोक्तमस्मिन्नधिकरणे ''संस्कारैः संस्कृता ये तु ते सर्वेऽप्यधिकारिणः'' इति। ''शूद्रादीनां नाधिकार इति सम्यक् सुनिश्चितः'' इत्यनेनासंस्कृतानां शूद्रत्वात् तेषामेव नाधिकार इति तेषामाशयो ज्ञायते। अन्यथा — ''आगमेषु पदार्था ये त एव व्याससूत्रके'' इत्यादिस्वोक्तेर्विरोधः स्यात्।

किञ्च —

श्वपचोऽपि द्विजश्रेष्ठः शिवभक्त्या द्विजाधिकः ।
शिवभक्तिविहीनस्तु ब्राह्मणः श्वपचाधमः ।।
[ शिवसंस्कारहीनस्तु द्विजोऽपि श्वपचाधमः ।। ]
काञ्चनं रजतं ताम्रं लोहं चेति चतुष्टयम् ।
यद्वदेति सुवर्णत्वं रसवेधप्रभावतः ।।
तद्वत् शूद्रादिपात्रं हि शिवमात्रात्मकेन तु ।
विद्धद्रसेन महता परब्रह्मत्वमेत्यलम् ।।
शिवसंस्कारसम्पन्नो ह्ययं शूद्रो ह्ययं द्विजः ।
लिङ्गभेदः कृतो येन रौरवं नरकं व्रजेत् ।।

इत्यादिशिवरहस्यवाक्यानामप्रामाण्यं स्यात्।

नन्वस्मिन्नधिकरणे कारिकाटीकाकारेण निर्वाणमन्त्रिणा श्रीकरभाष्यकारेण श्रीपतिपण्डितेन च शूद्रादीनां संस्काराभावस्य दर्शितत्वात् तयोर्भवदभिमतशिवदीक्षासम्पन्नत्वात् तदभिप्रायानुसारेणौचित्यात् किं तदभिप्रायविरुद्धव्याख्यानेनेति चेन्न, निर्वाणमन्त्रिणा कारिकाकारतात्पर्यगन्धलेशस्याप्यज्ञातत्वात्, क्रियासारस्य साकल्येनाविचारितत्वात्, मायावादिभिरिव शूद्रादिसंस्कारानर्हत्वं दर्शितम्। श्रीकरभाष्यकारेणापि पूर्वापरसूत्रपर्यालोचनाभावादेव दर्शितमिति मद्व्याख्यानपरिशीलनचतुरैर्ज्ञायत एव। अनेन क्रियाङ्गभूतयज्ञोपवीत-मोक्षप्रयोजकविद्याङ्गलिङ्गयोरुभयोरपि धृतत्वाद् अनयोः स्वस्वकार्यार्जनौन्मुख्ये सति परस्परविरुद्धप्रमदाकृष्टपुरुषस्येवान्येषां च तदनुयायिनां न किमपि प्रयोजनं स्यात्। "नौकायामेकपादस्तु पादस्तीरं न मुञ्चति" इति न्यायेनास्याधुनिकस्य भाष्यकारस्य भवसागरातिक्रमणं स्यात्। उक्तं च भृगुसंहितायाम् — "सदा सन्निहितः शैवश्चाण्डालो नैव सर्वदा। गतं शूद्रस्य शूद्रत्वमन्यथा ब्राह्मणस्य तु।। शिवसंस्कारसम्पन्ने जातिभेदो न विद्यते।" उक्तं च गरुडपुराणे — "नमके चमके पञ्चब्रह्ममात्रे च वैदिके। तेषामप्यधिकारोऽस्ति शिवदीक्षाप्रभावतः।।" उक्तं च शिवपुराणे —

यथा पङ्के सरोजं स्याद् यथा काष्ठे हुताशनः ।
यथा सुवर्णं पाषाणे भक्तश्चाण्डालवंशजः ।।
स्त्री वाथ पुरुषः षण्डश्चण्डालो द्विजवंशजः ।
न जातिभेदो लिङ्गार्चाः सर्वे रुद्रगणाः स्मृताः ।।

शिवदीक्षाभिजातस्य पूर्वजातिं न चिन्तयेत् ।
सुप्रतिष्ठितलिङ्गे तु न यथा पूर्वभावना ।।

उक्तं च लैङ्गेऽपि —

दार्वश्मलोहमृद्रत्नजातलिङ्गं प्रतिष्ठितम् ।
यथा पूज्यं तथैव स्याद् भक्तश्चण्डालवंशजः ।।

उक्तं च शिवरहस्ये प्रदेशान्तरे —

सर्ववेदेषु सर्वज्ञः सर्वयज्ञेषु दीक्षितः ।
महापातककोटिघ्नः श्वपचो लिङ्गपूजकः ।।

उक्तं च महाभारतेऽपि —

जन्मना जायते शूद्रः कर्मणा जायते द्विजः ।
वेदशास्त्रार्थविद् विप्रो ब्रह्म जानाति ब्राह्मणः ।।

उक्तं च स्कान्दपुराणे —

ये रुद्रपिण्डसञ्जाता ये वेदक्रमपाठकाः ।
ये विदुर्ब्रह्मवाच्यं श्रीरुद्रं ते ब्राह्मणाः स्मृताः ।।

इत्याद्यसंख्यातवाक्यानां प्रामाण्या:त् शूद्रादीनां संस्काराधिकारत्वात् तेषां संस्कृतत्वे वेदाध्ययनवेदार्थविचाराद्यधिकारत्वात्, नहि तेषां संस्काराधिकाराभावान्न ब्रह्मविद्याधिकार इति वादिनां मतं शिष्टादरणीयं भवितुमर्हति ।।३५।।

अदीक्षितानां सर्वेषां महावाक्यश्रवणादौ शिवज्ञानिनो न प्रवर्तन्त इत्याह —

## तदभावनिर्धारणे च प्रवृत्तेः ।।३६।।

वेधादिदीक्षात्रयेण योगाङ्ग-भोगाङ्ग-त्यागाङ्गापरनामककारण-सूक्ष्म-स्थूलशरीर-त्रयावच्छिन्नजीवत्रये भावादिलिङ्गत्रययोजनानन्तरं शिष्यस्य शूद्रत्वाभावं निश्चित्य गुरुस्तस्य तत्त्वमस्याद्युपदेशे प्रवर्तते। तस्माद्दीक्षाभावे शूद्रादीनां महावाक्यश्रवणादौ नाधिकारः। अत्र — "कोऽहमित्यब्रवीद्देही गुरुं परमकारणम्। गुरुस्तत्त्वमसीत्याह सत्यार्थं करुणानिधिः।।" इत्यादीनि वाक्यान्यनुसन्धेयानि।

एवं च लिङ्गधारणशालिनां शिवज्ञानिनां गौतमादिमुनीनां दीक्षया शूद्रत्वादीनामभावस्य निर्धारणे सति शरणागतशिष्यविद्योपदेशे प्रवृत्तेर्दर्शनाद् गौतमादीनां लिङ्गधारणशालित्वे — "ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः। धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः।।"

इत्यादीनि प्रमाणानि द्रष्टव्यानि। तस्मान्नादीक्षितस्य ब्रह्मविद्यायामधिकारः, अदीक्षितस्य मलत्रयविद्ध्वंसाभावात्, ''अतप्ततनुर्न तदामोऽश्नुते'' इति श्रुतेः। तप्ता वेधा-मनु-क्रियादीक्षात्रयेण निर्दग्धा पापपञ्जरा तनुर्यस्य सा न भवतीत्यतप्ततनुः = दीक्षात्रयरहितः, अत एव आमः = अपरिपक्वान्तःकरणः सन् तत् शिवस्वरूपं न अश्नुते। एतदृग्मन्त्रेण, ''अमृतस्य देवधारणो भूयासम्'' इत्याद्यनेकश्रुतिभिश्च मुक्त्यसाधारण-कारणताग्राहकव्यतिरेकान्वयदर्शनात्, ''लिङ्गाङ्गसङ्गिनो वत्स पुनर्जन्म न विद्यते'' इति शङ्करसंहितावचनानुरोधेन च शिवदीक्षाया एव मुक्त्यसाधारणकारणत्वात् ।।३६।।

तदभावे तत्कारणकवेदवाक्यश्रवणवेदाध्ययनादिः प्रतिषिध्यते, इत्याह —

## श्रवणाध्ययनार्थप्रतिषेधात् ।। ३७।।

''ज्ञानादीनामुपायानां दीक्षा कारणमीर्यते। दीक्षयैव विमोक्षः स्यादुपायास्तन्नियामकाः।।'' ज्ञानादीनां वेदार्थज्ञानादीनाम्, आदिपदेन श्रवणादेर्गृह्यमाणत्वाद् दीक्षारूपकारणाभावे तत्कार्यरूपश्रवणाध्ययनादीनामभावाद् नैवादीक्षितशूद्रादेर्ब्रह्मविद्यायामधिकारः। तस्मात् सर्वेऽपि मानवा दीक्षासम्पन्नाः सन्तो वेदश्रवणवेदाध्ययनादिना मुक्ता भवेयुरिति सूत्रतात्पर्यम्। अत एवोच्यते दीक्षारूपोपायस्य सर्वश्रेष्ठत्वम्। तथा च — ''दीक्षैव मोक्षदा पुंसां चिदचिच्छक्तिकारणम्। नास्ति दीक्षासमं तीर्थं नास्ति दीक्षासमं तपः।। नास्ति दीक्षासमं शीलं नास्ति दीक्षासमं धनम्। नास्ति दीक्षासमो धर्मो नास्ति दीक्षासमो गुणः।। नास्ति दीक्षासमं ज्ञानं नास्ति दीक्षासमं कुलम्। सा दीक्षा गुरुणा कार्या तस्या भेद इहोच्यते।।'' इति ।

शिवदीक्षायाः स्वीकाराभावे प्रत्यवायोऽपि दृश्यते — ''लिङ्गस्य धारणं यस्य स्थूलदेहे न विद्यते। तद्देहं निष्फलं ज्ञेयं जीवत्यक्तशरीरवत्।। यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु। तथा लिङ्गविहीनस्तु सर्वकर्मबहिष्कृतः।। यस्य वक्षःस्थले लिङ्गं कण्ठे रुद्राक्षमालिका। न फाले भूतिरेखाश्च तं त्यजेदन्त्यजं यथा।। लिङ्गस्य धारणं विप्रो मनसापि न लङ्घयेत्। श्रुत्या विधीयते यस्मात् तत्त्यागी पतितो भवेत्।। ब्राह्मणानां शिवो देवस्तस्मात्तल्लिङ्गधारणम्। कर्तव्यं ब्राह्मणानां तु वेदवेदान्तशासनात्।।'' इति। लिङ्गविहीनस्य सर्ववैदिककर्मबहिष्कृतत्वे सिद्धे वेदश्रवणाऽध्ययनादिकस्य सुतरां निषेधोऽवगम्यते। एवं व्यवस्थिते परादृतानि — ''तस्माच्छूद्रसमीपे नाध्येतव्यम्'', ''शूद्राय न मतिं दद्यात्'' इत्यादीन्यपि वाक्यान्यदीक्षितसमीपेऽध्ययनादिकं निवारयन्तीति बोध्यम्।।३७।।

दीक्षैव मोक्षकारणमिति व्यतिरेकमुखेनोक्त्वाऽन्वयमुखेन स्मृतितोऽपि दीक्षितस्यैव ब्रह्मविद्यालाभो भवति, तल्लाभे मोक्ष इत्याह —

## स्मृतेश्च ।।३८।।

"कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्। मानवः शिवयोगेन शिवो भवति सर्वदा।।" इति स्मृतेश्चेत्यर्थः। तथा चोक्तरीत्या दीक्षात्रयेण शिवात्मकलिङ्गयोगे सति श्रवणाध्ययनादिकं कृत्वा शिवो भवति, शिवस्वरूपो भवतीत्यर्थः। अत एवोक्तम् —"यदा गुरुवरः सम्यक् कथयेत् तन्न संशयः। तदैव जायते मुक्तिर्यन्त्रस्तिष्ठति केवलः।।" इति। अत एवाम्नायेषु यदुच्यते — "शिवो भूत्वा शिवं यजेत्" इति, तस्य शिवदीक्षासम्पन्नो भूत्वा शिवलिङ्गरूपं यजेदित्यर्थः सङ्गच्छते।

उक्तं च शिवधर्मेऽपि — "नारुद्रः संस्मरेद् रुद्रं नारुद्रो रुद्रमर्चयेत्। नारुद्रः कीर्तयेद् रुद्रं नारुद्रो रुद्रमाप्नुयात्।।" इति। तस्माद् दीक्षासम्पन्नस्य शिवत्वसमावेशात्, "यः शिवत्वसमावेशो वेधादीक्षेति सा मता" इत्युक्त्वा शिवो भूत्वा शिवं यजेदिति श्रुतिः शिवयजनं विधत्ते। ननु दीक्षासंस्कारस्य लिङ्गधारणादिपञ्चाचाराष्टावरणयोग्यतानिर्वहणाङ्गत्वेन शेषशेषिभावदर्शनात् शिवत्वसमावेशस्य वेधादीक्षात्वमुक्तमसङ्गतमिति चेन्न, "स्वर्गकामो ज्योतिष्टोमेन यजेत", "स्वर्गकाम इष्ट्या यजेत" इति तत् स्वर्गसुखविशेषस्य वैलक्षण्यम्, ज्योतिष्टोमेनान्यत् स्वर्गरूपं सुखम्, अन्यत् सुखमिष्ट्या इतीव शिवत्वसमावेशस्य वैलक्षण्यात्, वेधादीक्षायां यत्किञ्चित्समावेशस्यांशविरूपोपचयक्रमेण सम्भवात्, दीक्षाभूतिधारणरुद्राक्षधारणपञ्चाक्षरोपदेशादिषु पूर्वपूर्वविलक्षणशिवत्वसमावेशस्य सुवचत्वात्। पूर्वतन्त्रानुरोधेनैव— "यः शिवत्वसमावेशो वेधादीक्षेति सा मता।। मन्त्रदीक्षेति सा चोक्ता मन्त्रमात्रोपदेशिनी। लिङ्गोपदेशिनी प्रोक्ता क्रियादीक्षा क्रियोत्तरा।।" इत्युक्तत्वात्। एवमेवोत्पलदेवाचार्येणाप्युक्तं शिवस्तोत्रावल्याम् — "शिवो भूत्वा यजेतेति भक्तो भूत्वेति कथ्यते। त्वमेव हि वपुस्सारं भक्तैरध्वसु शोधितम्।।" इति। तथा चोक्तस्मृत्या शिवदीक्षासम्पन्नस्यैव शिवत्वसमावेशापन्नत्वात् स एव श्रवणाध्ययनादिकर्मार्हति, नान्य इति सिद्धम्।

एवं चादीक्षितानां पूर्वजात्यादिसत्त्वात्, शिवत्वसमावेशाभावात्, शिवो भूत्वा शिवं यजेदिति विधानाच्च न तेषां शिवलिङ्गरूपब्रह्मोपासनेऽधिकारः। यजनं चात्र धारणम् — "त्र्यम्बकं यजामहे" इत्यादेरुपबृंहणवाक्ये "यजामहे धारयामः" इत्युपबृंहितत्वात्, माहेश्वरक्षेमराजसुधीभिरपि स्वस्वरूपशिवसमावेशभक्तिशाल्येव यजनमित्युक्तत्वाच्च।

यद्यपि परादृतं "अथ हास्य वेदमुपशृण्वतः" इत्यादिकमपि वाक्यम्। तद् हास्येत्येतत्पदस्यादीक्षितपरत्वेन व्याख्याने नास्माकं विरोधः। तदाप्यहिंसापरिपालनशालिनां वीरशैवानां तादृशवाक्योच्चारणस्याप्ययुक्तत्वात्, तदुच्चारणे तदुल्लेखने वा कस्याश्चिद्धिंसायाः सम्भवात्। किञ्च, पथिकादीनामकस्मात् तच्छ्रवणे तादृशदण्डानर्हत्वात् तस्यान्याय्यत्वाच्च, "अदण्ड्यान् दण्डयन् राजा" इत्यादिना विचारमन्तरा दण्डकरणे प्रत्यवायदर्शनाद् धूर्तैरसूयान्धैः कल्पितं तादृशवाक्यं विवेकहीनोन्मत्तोक्तमिव नादरणीयमिति।

एवं च श्रीमद्वीरशैवाचारनिरतैः सदा लिङ्गाङ्गसंयोगसन्निहितैः गुरुलिङ्गजङ्गम-पादोदकप्रसादासक्तैर्विभूतिधारण-रुद्राक्षधारण-पञ्चाक्षरजपयुक्तैर्वेदान्तागमोदितवीरमाहेश्व-रोचिततत्त्वमस्यादिमहावाक्यार्थलिङ्गाङ्गसंयोगब्रह्मात्म्यैक्यज्ञाननिष्ठैः सदाचारप्रवर्तकैः शिवभक्तैः शिवेतरदेवतास्मरणसंस्तवनदर्शनस्पर्शनादिविमुखैः श्रीनन्दिनाथश्रीभृङ्गिनाथ-श्रीवीरभद्रेश्वरादिप्रमथगणैः कलविकरणरुद्रश्रीकण्ठरुद्रनीललोहितरुद्रकालाग्निरुद्रा-दिरुद्रगणैः श्रीमरुळसिद्धरेवणसिद्धाद्याचार्यगणैर्गौतमदूर्वासागत्स्योपमन्युवामदेवादिमुनिगणैः शूद्रादिसंस्कारानर्हत्वस्यानभ्युपगतत्वान्महाजनमार्गावलम्बिनो वयम् — "यः स्थापयितुमुद्यक्तः श्रद्धयैवाक्षमोऽपि सन्। धर्मं स्थापयितुं पुंसां यतमानः स हि द्विजः।। रक्षणं कुरुते यस्तु सोऽपीश्वरपदं व्रजेत्। यः शाम्भवमहाधर्मस्थापनार्थं त्यजेदसून्। स गणेशत्वमाप्नोति शङ्करस्य प्रसादतः।।" इत्युक्तरीत्या वस्तुतो वीरशैवसिद्धान्तपरकब्रह्मसूत्राणां तन्मात्रपरकतया व्याख्यानोद्यमनिरताः स्मः। तस्मान्न स्वकपोलकल्पितत्वादिदोषस्पर्शलेशस्यावकाश इति।।३८।।

प्रासङ्गिकमधिकारिनिरूपणं कृत्वा प्रकृतमनुसरति —

**कम्पनात् ।।३९।।**

"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्" इति वाक्ये प्राणशब्देन परशिवब्रह्मोच्यते। कुतः? कम्पनात्, उत्पन्नसकलप्रपञ्चस्य परशिवब्रह्मानुशासनेन कम्पनादित्यर्थः। प्राणवायोः सकलप्रपञ्चकम्पनहेतुत्त्वाभावात्, परशिवस्य कल्याणमूर्तित्वेऽपि सर्वनियामकशक्तिमत्त्वात्, सर्वभयदर्शकत्वं पवनादीनामीशशासन-भयादेव पवमानत्वादीनां श्रवणात्, तस्यैव सकलप्रपञ्चभयहेतुत्वम् ।।३९।।

एवं ज्योतिःशब्दवाच्यत्वमपि परशिवस्यैवेति दर्शयति —

**ज्योतिर्दर्शनात् ।।४०।।**

"एष सम्प्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र ज्योतिःशब्देन परशिवब्रह्मोच्यते, न तु भौतिकं ज्योतिर्गृह्यते। कुतः ? दर्शनात्। "तं देवा ज्योतिषां ज्योतिः" इत्यादौ ज्योतिःशब्दस्य परशिवब्रह्मणि प्रयोगदर्शनात्, "स उत्तमः पुरुषः" इत्यनेन ज्योतिःशब्दनिर्दिष्टस्योत्तमपुरुषत्वाभिधानात्, परशिवब्रह्मनिर्णयाच्च ज्योतिःशब्दवाच्यत्वं परशिवस्यैवेति सिद्धम्। हरिवंशे कृष्णं प्रति परमेश्वरवचनं च — "यानि नामानि गोविन्द तव लोके महीयसः। तान्येव मम नामानि नात्र कार्या विचारणा।।" इति वाक्यदर्शनात् पुरुषोत्तमशब्दवाच्यत्वं तस्यैव सिद्धम् ।।४०।।

आकाशशब्दवाच्यत्वं शिवस्यैवेति दर्शयति —

**आकाशोऽर्थान्तरत्वादिव्यपदेशात् ।।४१।।**

"आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इत्यत्र श्रुतौ नामरूपनिर्वोढृत्वेन श्रूयमाण आकाशः परमात्मैव, न भूताकाशादिः। कुतः ? अर्थान्तरत्वादिव्यपदेशात्। अर्थानां पदार्थानाम्, अन्तरत्वादिव्यपदेशाद् नामरूपात्मकस्थूलसूक्ष्मचिदचित्प्रपञ्चान्तर्यामित्वकथनादित्यर्थः। आदिना "ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इत्यादिना निर्दिष्टस्यामृतत्वादितद्धर्मव्यपदेशोऽपि ग्राह्यः। नहि भूताकाशादौ अमृतत्वादिधर्माः सम्भवन्ति, अतः परमेश्वर एवाकाशशब्दवाच्यः ।।४१।।

"कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्यत्र विज्ञानमयशब्दवाच्यत्वं मुक्तजीवस्य, न तु बद्धजीवस्येति दर्शयति —

**सुषुप्त्युत्क्रान्त्योर्भेदेन ।।४२।।**

व्यपदेशादित्यनुवृत्तिः। सुषुप्त्युत्क्रान्त्योः सुषुप्त्युवस्थायामुत्क्रान्त्यवस्थायां च जीवब्रह्मभेदस्य भेदेन = द्विवारं प्रतिपादितत्वात्। तथाहि "अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति, "अयं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारुढ उत्सर्जन् याति" इति च जीवाद् व्यतिरिक्ततया परमेश्वरस्य व्यपदेशादित्यर्थः।।४२।।

किञ्च हेत्वन्तरमाह —

**पत्यादिशब्देभ्यः ।।४३।।**

"स सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः", "स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्", "एष सर्वेश्वर एष भूतपतिरेष भूतपालः" इत्युत्तरत्रेशानादिपदप्रयोगादपि कतम आत्मेत्यादिवाक्यस्य मुक्तजीवपरकत्वनिर्णयादित्यर्थः।।४३।।

।। इति श्रीशाङ्करीवृत्तौ प्रथमाध्यायस्य
तृतीयः पादः समाप्तः ।।



## प्रथमाध्याये चतुर्थः पादः

नत्वा श्रीसर्वविद्येशं धृत्वा शिवकलां हृदि ।
स्तुत्वा गुरूंश्च तुर्यस्य वृत्तिः पादस्य कथ्यते ।।

एवं वेदान्तानां सर्वेषां परशिवप्रतिपादकत्वे सिद्धेऽपि कासुचित् शाखासु प्रधानजगत्कारणत्वप्रतिपादकशब्दानां दृष्टत्वात् कथं तस्याशब्दत्वमित्याशङ्कायां चतुर्थः पाद आरभ्यते—

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपक-विन्यस्तगृहीतेर्दर्शयति च ।।१।।

आनुमानिकं सांख्यपरिकल्पितं प्रकृत्यादि, एकेषां शाखिनां शाखासु — "महतः परमव्यक्तं अव्यक्तात् पुरुषः परः" इत्यत्र प्रधानमव्यक्तशब्देन प्रतिपाद्यते। एवंजातीयकासु श्रुतिषु सांख्यमतपदार्थानां श्रूयमाणत्वात् कथं प्रधानस्याशब्दत्वमिति चेन्न, शरीररूपकविन्यस्तगृहीतेः, शरीरस्य रूपकविन्यस्तस्य पूर्ववाक्ये — "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यत्र रथत्वेन निरूपितस्य गृहीतेः, अत्राव्यक्तशब्देन ग्रहणादित्यर्थः। अव्यक्तशब्दस्य कथं शरीरपरकत्वम्? इत्याशङ्कायामाह— दर्शयति चेति। पूर्ववाक्यतात्पर्यं पर्यालोच्यमानमव्यक्तशब्दस्य शरीरपरत्वं दर्शयतीत्यर्थः। तथा हि — "आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।।" इति शरीरादे रथादिक्लृप्तिं दर्शयति। अनन्तरम् — "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः।। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।।" इति।।१।।

ननु शरीरस्य व्यक्तत्वात् कथं तस्याव्यक्तशब्देन ग्रहणमित्यत्राह —

### सूक्ष्मं तु तदर्हत्वात् ।।२।।

तुशब्दः शङ्कानिरासार्थः। सूक्ष्मं लिङ्गशरीरमव्यक्तशब्देन गृह्यते, कुतः? तदर्हत्वात्, अव्यक्तशब्दार्हत्वादित्यर्थः। तत्कार्यत्वात् स्थूलशरीरस्य कार्यकारणयोरभेदाद् अव्यक्तशब्देन तस्यापि ग्रहणे न दोषः।।२।।

ननु "महतः परमव्यक्तम्" इत्यत्र महत आत्मनः परत्वं कथमव्यक्तस्य शरीरस्येति चेदाह —

## तदधीनत्वादर्थवत् ।।३।।

तदधीनत्वात् शरीराधीनत्वात्, अर्थवत् शरीरस्य आत्मनः परत्वम् अर्थवदित्यर्थः। इन्द्रियव्यापारस्यार्थाधीनत्वाद्यथेन्द्रियेभ्यः परत्वमर्थानाम्, तथा आत्मनो बन्धमोक्षादिव्यवहारस्य शरीराधीनत्वाच्छरीरस्यात्मनः परत्वम् अर्थवज्जायत इत्यर्थः।।३।।

प्रकृतिपुरुषविवेकज्ञानान्मोक्ष इत्यङ्गीकुर्वाणैः सांख्यैः प्रधानमपि ज्ञेयत्वेनोक्तं स्यात्। न चात्र ज्ञेयत्वेन प्रधानमुच्यते, इत्याह —

## ज्ञेयत्वावचनाच्च ।।४।।

ज्ञेयत्वस्य अवचनात्, अकथनादित्यर्थः। अव्यक्तमात्रशब्दश्रवणान्न प्रधानमिहाव्यक्तं भवति ।।४।।

ननु ज्ञेयत्वमप्यस्योक्तमित्यत्राह —

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ।।५।।

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते।।" इत्युत्तरवाक्ये शब्दादिरहितस्य प्रधानस्य ज्ञेयत्वं वदतीति चेन्न, प्राज्ञो ह्यत्र निचाय्यत्वेनोच्यते। कुतः? प्रकरणात्, प्राज्ञस्यैव प्रकरणात्, "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इत्याद्युपक्रमान्न प्रधानस्य प्रकरणमस्ति। नहि प्रधानमात्रं ज्ञात्वा मृत्युमुखान्मुच्यत इति सांख्यैरङ्गीक्रियते। अङ्गीक्रियते च चेतनपुरुषविज्ञानान्मृत्युमुखान्मुच्यत इति। तस्मात् शब्दादिविहीनस्य प्राज्ञस्यैवात्मनो ज्ञेयत्वं न प्रधानस्येति भावः।।५।।

इतश्च नाव्यक्तं प्रधानमित्याह —

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ।।६।।

त्रयाणाम् अग्निजीवेश्वराणाम्, "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्" इत्यग्निविषयः प्रश्नः, "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः।।" इति जीवविषयकः प्रश्नः, "अन्यत्र

धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद।।'' इतीश्वरविषयः प्रश्नः। एवमुपन्यासोऽपि प्रतिवचनमपीत्यर्थः। ''लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा'' इति श्रुतेः, ''योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्।।'' इति श्रुतेः, ''न जायते म्रियते वा विपश्चित्'' इति श्रुतेश्च अग्निजीवेश्वराणां प्रतिवचनं दृश्यते। प्रधानविषयकप्रश्नप्रतिवचनयोरसत्त्वान्न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा।।६।।

किञ्च, हेत्वन्तरमाह —

## महद्वच्च ।।७।।

''बुद्धेरात्मा महान् परः'' इत्यत्र न प्रधानविकारो महान् भवति, आत्मशब्दप्रयोगात्। महच्छब्दस्यात्मवाचकत्वादव्यक्तशब्दस्यापि शरीरवाचकत्वमित्यर्थः। तस्मान्न सांख्याभिमतप्रधानस्य शब्दवत्त्वम् ।।७।।

नन्वन्यत्र जगत्कारणत्वेन श्रूयमाणस्य प्रधानस्यात्र तस्याप्रकृतत्वेऽपि शब्दवत्त्वमस्तु? इति चेदाह —

## चमसवदविशेषात् ।।८।।

ननु ''अजामेकां लोहितशुक्लकृष्णाम्'' इत्यादिश्रुत्या सांख्यसिद्धप्रधानस्य त्रिगुणात्मकस्योपदेशात् तस्य कथमशब्दत्वमिति चेन्न, अविशेषात्। अस्मिन् वाक्ये प्रधानस्य कस्यचिद्वैशेषिकशब्दाभावात्। ''अर्वाग्बिल ऊर्ध्वबुध्नश्चमसः'' इत्यत्र चमसवत्। यथात्रायमसौ चमस इति विशेषावगत्यभावान्न विशेषनिर्णयः, तथेत्यर्थः।।८।।

ननु ''इदं तच्छिरः'' इत्यादिवाक्यशेषात् शिरश्चमसनिर्णयः, अत्र कथमिति चेदाह —

## ज्योतिरुपक्रमात्तु तथाह्यधीयते एके ।।९।।

''यदग्ने रोहितं रूपं तेजसस्तद्रूपम्, यच्छुक्लं तदपाम्, यत्कृष्णं तदन्नस्य'' इत्येके शाखिनश्छान्दोग्येऽधीयते। तस्मात् परमशिवाविर्भूतज्योतिस्तेजोऽबन्नलक्षणा प्रकृतिरेवाजाशब्देन गृह्यते। अत्र प्रकृतिः शक्तिरेव, न तु तदतिरिक्तेत्यर्थः। कुतः? ''ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्'' इत्युपक्रमात्। वाक्यशेषेऽपि— ''मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्'' इति तस्या एव शैवशक्तेर्दर्शनान्न प्रकृतिः

प्रधानं सांख्यसिद्धमजाशब्देन वक्तुं शक्यते, न वा मिथ्याभूता मायावादिसिद्धाऽविद्या, "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुत्या शिवशक्तेः शिवरूपावगमात्। अत्रापि मं शिवम् अयति गच्छत्यविनाभावसम्बन्धेन वर्तत इति व्युत्पत्तिमाश्रित्य मायां शिवसमवेतां विमर्शशक्तिं प्रकृतिम्, प्रकृष्टा कृतिर्जगत्सृष्ट्यादिपञ्च-कृत्यरूपा यस्यास्तामित्यर्थः। तत्कार्यरूपेण गुणशक्तेस्त्रैरूप्यमुक्तम् (लोहितशुक्ल-कृष्णपदत्रयेणेत्यर्थः)। तथा चोक्तं कारिकाकारेण —

तेजोबन्नप्रकृतिरप्यजाशब्देन गृह्यते ।
तथा ह्येकेऽधीयतेऽत्र प्रकृतिः शक्तिरेव च ।।९।।

ननु परमशिवाविर्भूततेजोबन्नात्मिकाया अवान्तरशक्तेः परशिवकार्यत्वात् कथ-मजाशब्देन ग्रहीतुं सा शक्येतेत्याकाङ्क्षायामाह —

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ।।१०।।

चशब्दः पूर्वपक्षनिरासार्थः। अवान्तरकार्यरूपप्रकृतेर्नाजात्वानुपपत्तिः, कल्पनोपदेशात् साम्योपदेशाद् अविरोधः, अजाशब्दस्य विरोधो नास्तीत्यर्थः। मध्वादिवत्। "असौ वा आदित्यो देवमधु" इत्यत्र यथादित्यस्य मधुत्वकल्पनमुच्यते, तथात्रापि लोकप्रसिद्धाजासादृश्यमुच्यते। न चात्र प्रकृतेः स्वातन्त्र्येण कारणत्वमिति वाच्यम्, "छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं च वेदा वदन्ति", "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः।।" इति श्रुत्या मायाविशिष्टस्यैव शिवस्य कारणत्वश्रवणात्। इच्छाशक्त्यंशाविर्भूतस्थूलमायाशक्तेरेव सृष्टिदशायां कार्यत्वम्, मोक्षदशायां विलीनत्वं च, न तु शिवाभिन्नेच्छाशक्तेः। तस्मात् शिवाविभक्तशक्तेरजाशब्दवाच्यप्रकृतेः परशिवनिष्ठकारणत्वं न विरुध्यत इत्यपि बोध्यम्। शक्तेः शिवाभिन्नत्वे — "शक्तिरस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः। शक्तिस्तु शक्तिमद्रूपाद् व्यतिरिक्ता हि न क्वचित्।। तादात्म्यमनयोर्नित्यं वह्निदाहकशक्तिवत्।। शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः।।" इति ।।१०।।

प्रधानस्य जगत्कारणत्वं निरस्य पञ्चविंशतितत्त्वानि वैदिकानीत्याशङ्क्य निराकरोत्यधिकरणान्तरेण —

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ।।११।।

संख्योपसंग्रहात् = "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्यत्र पञ्चविंशतिसंख्याश्रवणात्,

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ।।

इति सांख्यसिद्धानि पञ्चविंशतितत्त्वानि वैदिकानीति वक्तुं शक्यत्वे कथं मूलप्रकृतेरवैदिकत्वमिति चेन्न, नानाभावाद् नानात्वात्, पञ्चविंशतिसंख्याकपदार्थानां बहूनां सत्त्वात्। अतिरेकाच्च आकाशपुरुषकालादीनां पञ्चविंशतिसंख्यातिरिक्ततः, षट्त्रिंशत्संख्योपपत्तेर्न पञ्चविंशतिसंख्याप्रतिपत्तिः। नन्वत्र कालादितत्त्वानामदर्शनात् कथं षट्त्रिंशत्तत्त्वसंख्याप्रतिपत्तिरिति चेन्न, वृद्धजाबालोपनिषदि पशुपाशपतिपदार्थ-निरूपणानन्तरं शिवस्य पञ्चकृत्यकर्तृत्वं प्रसाध्य "पुनस्तं होवाच कानि षट्त्रिंशत् तत्त्वानीति? स तस्मा आह — शिवः शक्तिः सदाशिव ईश्वरः शुद्धविद्या इत्येतानि शुद्धानि" इत्यादिना षट्त्रिंशत्तत्त्वश्रवणात्। अपि च, सिद्धान्तागमोपबृंहितश्रुतिवाक्यैरपि षट्त्रिंशत्तत्त्वानि वैदिकानीति ज्ञायन्ते। तथाहि —

षट्त्रिंशत्तत्त्वरूपत्वं तल्लिङ्गैरेव सर्वदा ।
पञ्चब्रह्माभिधैर्मन्त्रैः प्रोच्यते परमार्थतः ।।
सद्योजातस्वरूपाय भूतत्वाय नमोस्तु ते ।

इत्यादिना, "शिवतत्त्वात्मने तुभ्यम् ओङ्काराय नमो नमः" इत्यन्तेन। तस्मान्न सांख्यसिद्धपञ्चविंशतितत्त्वानि।।११।।

नन्वत्र पञ्चजनशब्देन के विवक्षिताः? अत आह —

## प्राणादयो वाक्यशेषात् ।।१२।।

....."प्राणस्य प्राणमुत चक्षुषश्चक्षुः........ न्नस्यान्नं मनसो ....."

पुनर्हेत्वन्तरमाह —

## ज्योतिषैकेषामसत्यन्ने ।।१३।।

एकेषां काण्वादीनामन्ने — अन्नशब्देऽसति सति "तद्देवा ज्योतिषां ज्योतिः" इत्यत्र ज्योतिःशब्देन पञ्च पञ्चजना इन्द्रियाणीति ज्ञायन्ते।।१३।।

"आत्मन आकाशः सम्भूतः" इत्यत्राकाशस्यैव ब्रह्मकार्यत्वावगमाद् ब्रह्मकार्यत्वं पञ्चमहाभूतानामयुक्तमिति शङ्कायामाह —

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ।।१४।।

आकाशादिषु आकाशादिपञ्चमहाभूतेषु कारणत्वेन ब्रह्मणः साक्षात्कारणत्वेनोक्तत्वात्, ''एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'' इति श्रुतेः। यथा परशिवब्रह्मकार्यत्वं महाभूतानाम्, तथा ''आकाशाद्वायुः'' इत्यादावपि तत्र कारणत्वेन व्यपदिष्टस्य परशिवस्य, उक्तेः कथनादित्यर्थः। तथा च — ''आकाशाद्वायुः, वायोरग्निः'' इत्यादावपि स्वशक्त्यंशपरिणताशुद्धमायावच्छिन्नेश्वरादाकाशस्य जनिमत्त्वम्, तदाकाशावच्छिन्नशिवादेव वायोरुत्पत्तिरित्यादिकं ज्ञातव्यम्।।१४।।

ननु — ''असद्वा इदमग्र आसीत्'' इत्यत्रासत एव शून्यस्य जगत्कारणत्वश्रवणात् कथं शिवस्य जगत्कारणत्वम्? इत्याह —

## समाकर्षात्।।१५।।

''सोऽकामयत बहु स्यां प्रजायेय'' इति पूर्वनिर्दिष्टस्य सर्वज्ञस्य सर्वशक्तिकस्य शिवस्य ''असद्वा इदमग्र आसीत्'' इति श्रुत्या समाकर्षात्। एवं च नामरूपव्याकृतवस्तुपरकत्वं सच्छब्दस्य, तदव्याकृतवस्तुपरकत्वमसच्छब्दस्येति निर्णयान्न शून्यपरकत्वमसच्छब्दस्येति बोध्यम्।।१५।।

एतावता प्रधानजगत्कारणत्ववादं निरस्य निर्विशेषब्रह्मसन्निधानात् प्रधानस्य जगत्कारणत्वव्यवस्थापकं सार्वत्रिकजीवब्रह्माद्वैतवादं निराकरोत्यधिकरणान्तरेण —

## जगद्वाचित्वात्।।१६।।

''ब्रह्म ते ब्रवाणि'' इत्युपक्रम्य ''यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्यः'' इत्यत्र वेदितव्यत्वेन श्रूयमाणः परशिव एव। न तु जीवः, तस्य सकलजगत्कर्तृत्वासम्भवात्।

नन्वत्र कर्मशब्दस्य धर्माधर्मरूपाऽपूर्ववाचित्वात् तस्य व्यपगतकर्मसम्बन्धे परशिवे सत्त्वायोगात् कथं परशिवो वेदितव्यत्वेन वक्तुं शक्यते? इति चेन्न, जगद्वाचित्वाद् एतच्छब्दसमभिव्याहृतकर्मपदस्य क्रियत इति व्युत्पत्त्या जगद्वाचकत्वादित्यर्थः। एतेन जीवब्रह्मणोः पारमार्थिकभेदोपादानान्निरस्त एव शुद्धाद्वैतवाद इति बोध्यम्।।१६।।

।। शाङ्करीवृत्तिः समाप्ता ।।

।। इति ब्र० श्रीउमचिगिवृष्टिमठाध्यक्षेण शङ्करशास्त्रिणा विरचिता ब्रह्मसूत्रवृत्तिः समाप्ता ।।

अथ क्रियासारे वाक्यान्वयादित्यादिसूत्रार्थविचारः —

वाक्यान्वयात् परं ब्रह्म यल्लिङ्गं हृदयाम्बुजे ।
उपास्यं तत्परं ब्रह्म वेदितव्यं मनीषिभिः ।।४४३।।

लिङ्गं प्रतिज्ञासिद्धेश्च हृदब्जे धार्यमव्ययम् ।
आश्मरथ्यो मुनिस्तत्र मन्यते पुनरादरात् ।।४४४।।

एवंभावादौडुलोमिरित्येव ह्युक्तमिष्यते ।
अवस्थितेः काशकृत्स्न इति तद्ब्रह्मजीवयोः ।।४४५।।

न भेदोऽपि न चाभेदः सामरस्यात् तयोर्ध्रुवम् ।
भेदाभेदाभ्युपगमो विस्फुलिङ्गाग्निवत् तथा ।।४४६।।

जीवो ह्युपासकः साक्षादुपास्यं ब्रह्म केवलम् ।
लिङ्गाङ्गसामरस्येन भेदाभेदौ व्यवस्थितौ ।।४४७।।

प्रकृतिश्चेत्यादिसूत्रार्थविवरणम् —

उपादानं हि प्रकृतिर्निमित्तं ब्रह्म केवलम् ।
दृष्टान्तानुपरोधाच्च मृदादिवदिहेष्यते ।।४४८।।

तथाऽभिध्योपदेशाच्च प्रकृतित्वं विचार्यते ।
प्रकृतित्वं च कर्तृत्वं ब्रह्मणो वाक्यगौरवात् ।।४४९।।

साक्षादप्युभयाम्नानात् प्रकृतिः कर्तृ च श्रुतम् ।
योनिश्च हीतिसूत्रेण ब्रह्मणो निश्चितं पुनः ।।४५०।।

कर्तृत्वं प्रकृतित्वं च योनिशब्देन तत्तथा ।
परिणामादात्मकृतेरात्मानं स्वयमित्यतः ।।४५१।।

प्रकृतित्वं च कर्तृत्वं सिद्धं तस्मात् परस्य हि ।

एतेन सर्व इत्यादिसूत्रार्थः —

एतेन सर्वे व्याख्याता व्याख्याता इति सूत्रतः ।।४५२।।

एतैश्च हेतुभिः सर्वे वेदान्ता ब्रह्मतत्पराः ।
तद् ब्रह्म हृदये धार्यं प्रतिसूत्रं व्यवस्थितम् ।।४५३।।

एतदैश्वर्यविभवं लिङ्गं ब्रह्म हृदम्बुजे ।
सामरस्यविधानेन धार्यं पूज्यं मुमुक्षुभिः ।।४५४।।

तस्मात् सर्वप्रयत्नेन सर्वकर्माणि मानवः ।
परिवृत्य यथाकालं करपीठे तु पूजयेत् ।।४५५।।

यतः पापार्णवात् त्रातुं भक्तिर्नौरिव निर्मिता ।
तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किम् ।।४५६।।

अन्त्यजो वाधमो वापि मूर्खो वा पतितोऽपि वा ।
शिवभावं प्रपन्नश्चेत् पूज्यः सर्वसुरासुरैः ।।४५७।।

तस्मात् सर्वप्रयत्नेन हृदये धारयेच्छिवम् ।
अभक्तानां क्वचिदपि फलं नास्ति यतस्ततः ।।४५८।।

वेदैः शास्त्रैर्वेदविद्भिर्विचार्याथ सुनिश्चितम् ।
ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ।।४५९।।

मातृहा पितृहा वापि वीरहा भ्रूणहापि वा ।
सम्पूज्यामन्त्रकं भक्त्या शिवलिङ्गं परात्परम् ।।४६०।।

तैस्तैः पापैः प्रमुच्येत सामरस्यमना यदि ।
तस्मात् सर्वप्रयत्नेन पतितोऽपि यजेच्छिवम् ।।४६१।।

भक्तश्चेन्न परः कश्चिद् भिक्षाहारो जितेन्द्रियः ।
कृत्वापि सुमहत्पापं भक्त्या पञ्चाक्षरेण तु ।।४६२।।

पूजयेद्यदि तल्लिङ्गं तस्मात्पापात्प्रमुच्यते ।
अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ।।४६३।।

तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ।
भक्त्या पञ्चाक्षरेणैव यो लिङ्गं सकृदर्चयेत् ।।४६४।।

सोऽपि गच्छेत् शिवस्थानं शिवलिङ्गस्य धारणात् ।
तस्मात्तपांसि यज्ञाश्च सर्वे सर्वस्वदक्षिणाः ।।४६५।।

शिवलिङ्गार्चनस्यैते कोट्यंशेनापि नो समाः ।
अरुद्रो वा सरुद्रो वा शिवलिङ्गं समर्चयेत् ।।४६६।।

यः सकृत् पतितो वापि मूढो वा मुच्यते नरः ।
षडक्षरेण वा नित्यं तथा पञ्चाक्षरेण वा ॥४६७॥

एककालं द्विकालं वा त्रिकालं सर्वदाऽथवा ।
येऽर्चयन्ति महादेवं विज्ञेयास्ते गणेश्वराः ॥४६८॥

जातेनात्मद्रुहा येन नार्च्यते लिङ्गमैश्वरम् ।
स चिरं सञ्चरत्यस्मिन् संसारे दुःखसागरे ॥४६९॥

दुर्लभं प्राप्य मानुष्यं तल्लिङ्गं यो न धारयेत् ।
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ॥४७०॥

हृत्प्रदेशे सदा धार्यं शिवलिङ्गं मनीषिभिः ।
दुर्लभं प्राप्य मानुष्यं यो लिङ्गं हृदि धारयेत् ॥४७१॥

तस्यैव सफलं जन्म कृतार्थः स नरोत्तमः ।
लिङ्गाङ्गसम्भवा ये च शिवलिङ्गैकतत्पराः ॥४७२॥

शिवलिङ्गार्चनपरा न ते दुःखस्य भागिनः ।
ये वाञ्छन्ति महाभोगान् राज्यं च त्रिदशालयम् ॥४७३॥

तेऽर्चयन्ति सदाकालं हृदिस्थं लिङ्गमद्भुतम् ।
सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रभावता ॥४७४॥

शौर्यं च जगति ख्यातिर्लिङ्गमर्चयतो भवेत् ।
तस्मात् सर्वं परित्यज्य शिवैकाहितमानसः ॥४७५॥

सामरस्यविधिं कुर्याद् यदीच्छेच्छिवमात्मनः ।
संग्रहेण प्रमाणानि पुराणेष्वागमेषु च ॥४७६॥

अन्विष्य लिखितान्येतान्येतस्य विषये पुनः ।
पौनरुक्त्यमनादृत्य बुद्धिदार्ढ्याय सादरम् ॥४७७॥

**॥ प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥**



# उद्धृतग्रन्थ-ग्रन्थकारसूची

# व्याख्यातसूत्रसूची

## हमारे अन्य प्रकाशित ग्रन्थ

१. **लिङ्गधारणचन्द्रिका** (हिन्दी भावानुवाद सहित) *संपा० पं० व्रजवल्लभ द्विवेदी*

२. **सिद्धान्तशिखामणि:** तत्त्वप्रदीपिकाख्यसंस्कृतव्याख्यासहित: (मराठी भावानुवाद-सहितश्च) *संपा० ज० डा० चन्द्रशेखर शिवाचार्य महास्वामीजी*

३. **ब्रह्मसूत्रश्रीकण्ठभाष्यम्** (चतु:सूत्री) अप्पय्यदीक्षितकृतशिवार्कमणिदीपिका (संस्कृत-टीकासहितम्) *संपा० पं० व्रजवल्लभ द्विवेदी*

४. **वीरशैव अष्टावरण विज्ञान** (हिन्दी और मराठी) *डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी*

५. **सिद्धान्तशिखामणिसमीक्षा** *डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी*

६. **निगमागम संस्कृति** (हिन्दी) *संपा० पं० व्रजवल्लभ द्विवेदी*

७. **सूक्ष्मागम:** (हिन्दी भावानुवाद सहित:) *संपा० पं० व्रजवल्लभ द्विवेदी*

८. **चन्द्रज्ञानागम:** (हिन्दी भावानुवादसहित:) *संपा० पं० व्रजवल्लभ द्विवेदी*

९. **मकुटागम:** (हिन्दी भावानुवादसहित:) *संपा० प्रो० रामचन्द्र पाण्डेय*

१०. **कारणागम:** (हिन्दी भावानुवादहित:) *संपा० पं० व्रजवल्लभ द्विवेदी*

११. **निगमागमीयं संस्कृतिदर्शनम्** (संस्कृत) *संपा० व्रजवल्लभ द्विवेद:*

१२. **पारमेश्वरागम:** (हिन्दी भावानुवादसहित:) *संपा० पं० व्रजवल्लभ द्विवेदी*

१३. **ईशावास्योपनिषद्** (वीरशैवभाष्यसहित:) *संपा० पं० जगन्नाथ शास्त्री तैलंग*

१४. **केनोपनिषद्** (वीरशैवभाष्यसहित:) *संपा० पं० जगन्नाथ शास्त्री तैलंग*

१५. **सिद्धान्तप्रकाशिका** (हिन्दी भावानुवादसहित:) *संपा० पं० व्रजवल्लभ द्विवेदी*

१६. **शक्तिविशिष्टाद्वैततत्त्वत्रयविमर्श:** *ज० डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी*

१७. **अनुभवसूत्रम्** *संपा० गजानन शास्त्री मुसलगाँवकर*

१८. **सिद्धान्तशिखोपनिषद्** (वीरशैवभाष्यसहित:) *संपा० पं० जगन्नाथ शास्त्री तैलंग*

१९. **ब्रह्मसूत्रशाङ्करीवृत्ति:** *संपा० डॉ० केदारनाथ त्रिपाठी*

२०. **सिद्धान्तसारावलि:** *संपा० पं० व्रजवल्लभ द्विवेदी*

1. **Candrajñānāgama** (English Translation) *Dr. Rama Ghose*
2. **Makuṭāgama** (English Translation) *Dr. Rama Ghose*
3. **Pārameśvarāgama** (English Translation) *Dr. Rama Ghose*


**शैवभारती-शोधप्रतिष्ठानम्**

जंगमवाड़ीमठ, वाराणसी - २२१ ००१

☎ (0542) 321146